संस्कृतपुष्पम्-१

श्रीमदप्पयदीक्षितप्रणीता

धरानन्दविरचित 'सुधा' व्याख्यासमलङ्कृता

# चित्रमीमांसा

सम्पादकः

कालिकाप्रसादशुक्लः

वाराणसेयसंस्कृतविश्वविद्यालयः

वाराणसी

वाणीविहारः

वाराणसी-१

# CHITRAMĪMĀMSĀ

OF

APPAYA DĪKṢITA

With the Commentary of

DHARĀNANDA

Critically Edited by

KALIKA PRASAD SHUKLA
Varanaseya Sanskrit Vishwavidyalaya
VARANASI

VANIVIHAR
VARANASI

श्रीसरस्वत्यै नमः

सङ्गीतमथ साहित्यं सरस्वत्याः स्तनद्वयम् ।
एकमापातमधुरं द्वितीयं लोचनामृतम् ॥

# प्रस्तावना

द्रविडकुलकैरवकदम्बकलाधरस्य विबुधवादिवृन्दमत्तद्विपेन्द्रकण्ठीरवस्य नमदनेकराजन्यमौलिमणिमण्डितचरणयुगलस्य विजयनगरकाश्यपीसीमन्तिनीसीमन्तसौभाग्यबिन्दुपादपद्मपरागवेङ्कटनरेन्द्रास्थानासादिताग्रासनस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमदप्पयदीक्षितस्य स्वकीयसिद्धान्तसमर्थनसमुपस्थापितप्रबलप्रमाणपराभृताखिलालङ्कारिकोद्भटभटा चित्रालङ्कारचित्रिता चित्रमीमांसा नाम कृतिः सतत्त्वप्रकाशकसकलसामग्रीसम्भृतोपानीयते मत्सररहितानां विपश्चिदपश्चिमाना पाणिपद्मयोः ।

यद्यपि लोकोत्तरवर्णनानिपुणस्य कवेरसाधारण वर्णनात्मकं कर्म काव्यं ध्वनिगुणीभूतव्यङ्ग्यचित्रभेदात् त्रिविधं भवति, काव्यप्रकाशादिनिबन्धान्तरेषु च महताऽऽडम्बरेण ध्वनिगुणीभूतव्यङ्ग्ये अपि सभेदोदाहरणे निपुणं निरूपिते तथाप्यत्र चित्रकाव्यमेव निरूपणीयत्वेनादृतं नान्ये ।

तथा चोक्तम्—"तदेवं त्रिविधे ध्वनिगुणीभूतव्यङ्ग्ययोरन्यत्रास्माभिः प्रपञ्चः कृतः । शब्दचित्रस्य प्रायो नीरसत्वान्नात्यन्तं तदाद्रियन्ते कवयः, न वा तत्र विचारणीयमतीवोपलभ्यत इति शब्दचित्रमपहाय "अर्थचित्रमीमांसा" प्रसन्नविस्तीर्णा प्रस्तूयते" [ चि० मी० पृ० ३९–४० ] इति । अत एवास्य "अर्थचित्रमीमांसा" इति नामधेयेन भवितव्यमासीत्, किन्तु अद्यावधि प्रचलन्तीं पण्डितपरम्परामनुसृत्य परम्परापरित्यागपापपुञ्जपङ्कपातपलायमानमनसा मया 'गतानुगतिको लोकः' इति न्यायेन 'चित्रमीमांसा' इत्येवाभिधानं रक्षितम् । तत्र दीक्षितानां चित्रकाव्यवर्णने सामर्थ्यमन्यत्रासामर्थ्यञ्च हेतुरस्तीति केन वक्तुमपि साहसमाद्रियेत ! अपि त्वत्रेच्छैव नियामिका । तथा चोक्तं श्रीहर्षेण—

क्रमेलकं निन्दति कोमलेच्छुः क्रमेलकः कण्टकलम्पटस्तम् ।
प्रीतौ तयोरिष्टभुजोः समायां मध्यस्थता नैकतरोपहासः ॥

[ नै० ६,१०४ ]

क्वचिद्दोषवत्त्वे काव्यत्वाकाव्यत्वाभ्यामाकृष्यमाण किमपि न स्यात्, काव्यस्य विरलविषयत्वापत्तिश्च, सर्वथाऽदोषस्याभावेन निर्विषयत्वापत्तिश्च, नञ ईषदर्थे शक्तिस्वीकारे दोषाभाववति काव्यत्वानापत्तिश्च। सति सम्भवे 'ईषद्दोषौ' इत्यपि न; उपचारतया रत्नादिस्वरूपस्य कीटादिवेधानामिव तत्स्वरूपस्य दोषैरव्याघातात्। सगुणत्वविशेषणमप्यसत्, 'ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः' [का० प्र० उ० ८,६६] इत्यादिना तेषां रसनिष्ठत्वप्रतिपादनात्। रसाभिव्यञ्जकत्वेन तत्सार्थक्य न सम्भवति, गुणैस्तदन्वयव्यतिरेकनियमेन 'सरसौ' इत्यस्यावश्यकत्वे तद्व्यर्थत्वापत्तेः। 'प्राणिमन्तो देशाः' इति वक्तव्ये 'शौर्यादिमन्तो देशाः' इति कथनस्य व्यर्थत्वात्। अलङ्काराणामुत्कर्षमात्राधायकत्वेन स्वरूपानुपयोगात्तद्विशेषणस्यापि व्यर्थत्वाच्च। तस्मात् "रसात्मकं वाक्यं काव्यम्" इत्येव लक्षणमिति वदन्ति। तदसत्; वस्त्वादिप्रधाने काव्येऽव्याप्त्यापत्तेः। न चेष्टापत्तिः, महाकविसम्प्रदायस्याकुलीभावप्रसङ्गात्, जलप्रवाहवेगनिपतनादेः कपिबालादिविलसितानां च कविवर्णितत्वात्। तत्रापि परम्परया कथञ्चिद्रसाङ्गीकारे 'गौश्चलति' इत्यादावतिव्याप्त्यापत्तेः।

यत्तु, दोषरहितस्यैव तत्त्वे 'न्यक्कारो ह्ययम्' इत्यादौ विधेयाविमर्शसत्त्वेन तत्त्वव्याघात इति, तन्न, अन्येषां पराभवः, ममारिसम्बन्ध एव न्यक्कारः। बहुवचनेन बहवोऽस्य इत्यनुतापातिशयः। तापसपदोपादानेन तु तस्याशिक्षिताऽस्त्रत्वव्यञ्जनात्। सोऽप्यत्रैव सकलराक्षसपरीतायां लङ्कायामेवेति तिरस्कारातिशयः। रक्षन्ति परानिति यौगिकार्थाभावेऽपि स्वस्यापि रक्षणेऽसमर्थो जीवतीति सोत्प्रासकाक्वा स्वनामसंकीर्तनं वीररससंचार्यतिशयं पुष्णातीति प्रतिपदव्यङ्ग्यसत्त्वेन तत्सत्त्वात्, स्वाधिक्यकीर्तनार्थं स्वसंज्ञोच्चार एव दूषणसत्त्वात्।

यत्तु, 'क्वचिद्दोषवत्त्वे' इत्यादि, तदपि न, एकस्यापि ज्ञानस्य भ्रमत्व प्रमात्ववदेकस्याप्युभयत्वाङ्गीकारसत्त्वात्। न च सङ्करः, उपाधौ तस्येष्टत्वात्, जातावेव तदङ्गीकारात्।

तद्विरलविषयत्वे त्विष्टापत्तिः, द्वित्राण्येव काव्यानीति ध्वनिकारोक्तेः। यत्तु, दोषैर्न स्वरूपव्याघातः, तदपि न; तेषां रसापकर्षकत्वेन दोषापत्तौ तत्सत्त्वात्, तत्रापि काव्यत्वे लक्षणस्य व्यर्थत्वापत्तेश्च। सगुणत्वविशेषणमपि आवश्यकम्, तेषां रसाभिव्यञ्जकपरत्वेन अभावे स्वरूपव्याघातापत्तेः। अलङ्काराणामपि पृथक् चमत्कृतिजनकत्वेन तद्विशेषणस्यापि आवश्यकत्वात्, रसाद्यलङ्कारयोस्तज्जनकतायाः प्रदीपादिसम्मतत्वाच्चेति दिक्।

कविकर्म काव्यमिति यौगिकरूपसमाख्याबलाद् विभावादिद्योतकशब्दस्यैव तत्त्वम्, नार्थस्य, तस्य तत्कृत्यसाध्यत्वात्। अत एवाभ्यर्हितस्य तस्य प्राङ्निर्देशः। तथा चास्वादजीवातुः पदसन्दर्भः काव्यम्। अथवा योजनायामेव तद्व्यापारेण 'इष्टार्थावच्छिन्नतादृशयोजनाविषयशब्दावल्येव वा काव्यम्।' "शरीरं तावदिष्टार्थावच्छिन्ना पदावली (का० द० १।१) इति दण्ड्युक्तेः। न चोभयपदार्थप्रधानकद्वन्द्वविरोध इति वाच्यम्? काव्यस्य व्यङ्ग्यपरामर्शमृते चमत्कृत्यभावेन चित्तवशोऽहेतुत्वादुपदेशे पर्यवसानानुपपत्त्या व्यञ्जनाधीनव्यङ्ग्यपरामर्शावश्यकत्वात्। व्यञ्जनायाः शब्दार्थाश्रयावित्येतावन्मात्रेण द्वयोः प्राधान्यमङ्गीकृत्य तत्करणादिति रसगङ्गाधरानुयायिनः। तदपि न, काव्यत्वप्रयोजकस्यास्वादव्यञ्जकत्वस्य शब्दार्थयोरविशेषात्, अर्थेऽपि व्यञ्जनावृत्त्यङ्गीकारात्। शब्दार्थयोरुत्कर्षापकर्षाभ्यां तदुत्कर्षापकर्षव्यवहारात्, विभावाद्यर्थविशिष्टेषु तेषु वा तत्त्वे विनिगमकाभावाच्च। न च समाख्यैव विनिगमकम्, कविप्रकाश्यत्वेनैतदुपपत्तेः। इदं काव्यम् अमुकेन कृतमिति व्यवहारोऽपि तत्पर एव, अन्यथा तन्नित्यत्वे मौनिश्लोकादौ च तदसम्भवात्। विभावत्वादिव्यवहारस्य शब्दार्थयोजनरूपकविव्यापारावलम्बकत्वाच्च।

**रसगङ्गाधरकृतस्तु**—शब्दार्थयोः काव्यशब्दवाच्यत्वे प्रमाणाभावः, काव्यमुच्चैः पठ्यते, काव्यादर्थोऽवगम्यते इत्यादिसर्वप्रसिद्धव्यवहारशब्दविशेषस्य काव्यत्वप्रतिपत्तेः। व्यवहारस्य शब्दमात्रे लक्षणयोपपादनीयतापि न, काव्यत्वेन अभिमतशब्दार्थयुगले तच्छक्तिमापकदृढतरप्रमाणस्य असत्त्वात्, विमतवाक्ये श्रद्धाया अभावाच्च। एवञ्च काव्यस्योभयत्र शक्तिग्राहकप्रमाणाभावे व्यवहाराच्छब्दवृत्तितच्छक्तेर्दुर्निवार्यत्वाच्च। तथा च विनिगमकाभावकथनमपि न समीचीनो हेतुः। तथा च शब्दस्यैव तत्त्वे तल्लक्षणकथनमेव योग्यम्, न तु स्वकल्पितकाव्यपदार्थस्य।

यत्तु, आस्वादोद्बोधकस्यैव तत्प्रयोजकत्वे तस्य चोभयत्र सत्त्वाद्युगलमेव तदित्याहुः, तन्न, रागस्यापि व्यञ्जकत्वे सर्वसम्मतत्वेन काव्यत्वापत्तेः। एतेन रसोद्बोधसमर्थस्यैवात्र तत्त्वमिपास्तम्। सर्वनाट्याङ्गेषु तदापत्तेः। किञ्च तत्काव्यमुभयत्र व्यासज्यवृत्ति प्रत्येकपर्याप्तं वा। नाद्यः, एको न द्वाविति्वत् श्लोकवाक्यं न काव्यमिति व्यवहारापत्तेः। नान्त्यः, एकस्मिन् पद्ये काव्यद्वयव्यवहारापत्तेः। तस्मात्तस्य शब्दनिष्ठत्वमेव। लक्षणे गुणालङ्कारादिनिवेशोऽपि न सन् 'उदयमितश्चन्द्रः', 'गतोऽस्तमर्कः' इत्यादावव्याप्तेः। चमत्कारस्य तज्जीवितस्यात्र सत्त्वेन तदभावस्य वक्तुमयोग्यत्वात्। अन्यथा

तत्राभिमतस्यापि तत्त्वापत्तेः, तयोः तत्राननुगमाच्च। वृक्षः कपिसंयोगीतिवत् काव्यस्याव्याप्यवृत्तिताया अभावात्। मूले महीरुहो विहङ्गमसंयोगी न शाखायामिति प्रतीतेरिवेदं पूर्वार्द्धे काव्य नोत्तरार्द्धे इति प्रतीतेरप्रसिद्धत्वात्, आत्मधर्माणां गुणानामुपस्कारकाणामलङ्काराणा च शरीरघटकत्वानुपपत्तेश्च। तस्माद् रमणीयार्थप्रतिपादकः शब्दः काव्यम्। लोकोत्तराह्लादजनकज्ञानगोचरत्व रमणीयत्वम्। लोकोत्तरत्वञ्च आह्लादगतश्चमत्कारापरपर्यायोऽनुभवसाक्षिको जातिविशेष एव। पुत्रस्तेजातः, धन ते दास्यामीति वाक्यार्थधीजन्याह्लादस्य लोकोत्तराभावान्न काव्यत्वातिप्रसक्तिः।

इत्थञ्च चमत्कारजनकभावनाविषयार्थप्रतिपादकशब्दत्वम् यत्प्रतिपादितार्थविषयकभावनात्व चमत्कारजनकतावच्छेकं तत्त्वम्, स्वजनकतावच्छेदकार्थप्रतिपादकतासंसर्गेण चमत्कारवत्त्वमेव वा काव्यत्वमिति फलितमित्याहुः।

तदपि न, द्वयोरेव काव्यत्वस्येष्टत्वात्, कविव्यापारस्य तत्र समत्वात्। तत्त्वञ्च चमत्कारावच्छिन्नाह्लादजनकज्ञानगोचरत्वमेव। मृगो धावतीत्यादौ तादृग्व्यापाराभावान्न काव्यत्वम्। तस्य शब्दमात्रवृत्तित्वनियमे तु कविवक्तृप्रौढोक्तितन्निबद्धवक्तृप्रौढोक्तिरूपार्थशक्तिमूलत्वादेर्विलयापत्तेः। काव्य श्रुतमित्यादेः शक्तिसाधकव्यवहारस्येव काव्यं बुद्धमिति व्यवहारार्थे काव्यत्वप्रतिपादकत्वात्। एतस्यैव शब्दशक्तौ तन्नियमस्य प्रतिषेधकत्वात्, अलङ्कारादिविशिष्टस्य वर्णनाविषयस्य वा तस्य व्यासज्यवृत्ति वासम्भवात्। पर्याप्ते तु इष्टापत्तिरेव। न च काव्यद्वयव्यवहारापत्तिः, विजातीयैकचमत्कृतिजनकतया तद्व्यवहाराभावात्। शब्दस्य चमत्कृतिजनकत्वे तस्य, अर्थचमत्कृतौ अर्थस्य, उभयत्र चमत्कृतौ द्वयोरेव काव्यत्वव्यवहारात्। शब्दानन्त्यन्तु विजातीयैकचमत्कृतिजनकतया न दोषाय। किञ्च शब्दार्थयोरौत्पत्तिकनित्यसम्बन्धत्वात् तदन्वयव्यतिरेकानुविधानाद् द्वयोरेव तत्त्वमुचितम्। जन्यजनकभावस्तु न सम्भवति। 'वागार्थाविव' इत्यादावनुगामित्वानापत्तेः। नाप्यभेदः, मुखदाहाद्यापत्तेः। कल्पितत्वे सम्बन्धाना नियमाभाव एव। सर्वेषां कल्पितत्वेन समानत्वात्। भेदाभेदस्य तु न सम्बन्धत्वम्, समवायस्तु गुणगुणिनोरेव। तस्मात् तयोः सम्बन्धस्य नित्यतया स्वाभाविकत्वेन पृथगेकस्यानुपस्थितिरेवेति कथ शब्दस्य तत्त्वमिति तयोः सव्येतरविषाणवत् समानकालीनत्वप्रतिपत्तेरिति दिक्।

## चित्रकाव्यविमर्शः

यद्यपि चित्रशब्दः संस्कृतवाङ्मयेऽनेकेष्वर्थेषु प्रयुक्तो दृष्टिपथमवतरति तथाप्यत्र ग्रन्थे काव्यपरतयैव प्रयुक्तोऽस्तीति पूर्वं प्रतिपादितमेव वर्तते। काव्यार्थे चित्रशब्दः

प्रथम ध्वनिकारेण प्रयुक्त इति सम्प्रदायोऽस्ति। व्यङ्ग्यस्य प्राधान्ये ध्वनिसञ्ज्ञकम्; अप्राधान्ये च गुणीभूतव्यङ्ग्याभिध काव्यमुच्यते काव्यतत्त्वविद्भिः। ततो भिन्न रसभावादितात्पर्यविरहितं व्यङ्ग्यार्थविशेषप्रकाशनशक्तिशून्यञ्च शब्दार्थालङ्काररूप वैचित्र्यमुपजीव्य निबद्धं चित्रवत् तात्त्विकरूपविवक्षितव्यङ्ग्यरसादिस्वरूपजीवहीनं प्रतिकृतिरूप यदाभासते तच्चित्रम्। न तत् मुख्यं किन्तु गौणम्, अलङ्कारादिभिः काव्यसादृश्येन काव्यत्वारोपात्।

अत्र रसादितात्पर्यराहित्य रसादीना बुबोधयिषयाऽनिबद्धत्वम्। सर्वथा तद्राहित्य तु दुर्वचमेव स्यात्, सर्वेषामेव पदार्थाना विभावतायाः परिहर्त्तुम-शक्यतया तद् व्यङ्ग्यत् किञ्चिद् रसादि साहित्यात्।

व्यङ्ग्यार्थविशेषप्रकाशनशक्तिशून्यतापि पूर्ववत् व्यङ्ग्यवस्त्वादिप्रतिपादनेच्छया-ऽनिबद्धमेव। चित्रकाव्ये हि व्यङ्ग्यस्य सद्भावेऽप्यविवक्षितत्वादसत्कल्पना, न तु सर्वथा तदभाव एव।

तच्च चित्रकाव्यं द्विविधम्—शब्दचित्रम्, अर्थचित्रञ्च। शब्दचित्रं यथा—क्लेशनिर्मेयमकपद्मादिबन्धशब्दश्लेषादि। अर्थचित्र यथा शब्दचित्रादन्यद् व्यङ्ग्यादिसंस्पर्शरहितं प्राधान्येन वाक्यार्थतया स्थित रसादितात्पर्यरहितमुत्प्रेक्षो-पमादि। व्यङ्ग्यार्थसंस्पर्शरहितमिति समासोक्त्यादीनाम्, रसादितात्पर्यरहितमिति रसवदादीनां च गुणीभूतव्यङ्ग्यालङ्काराणां व्यवच्छेदाय विशेषणम्।

अत्रेद विचारणीयम्—दीपकतुल्ययोगितादिवदुत्प्रेक्षायामपि विवक्षितव्यङ्ग्यौ-पम्यसम्बन्धस्य जागरूकत्वात् कथमर्थचित्रत्वमिति। ननु किमिदं चित्रत्वम्! न तावत् व्यङ्ग्यरहितत्वम्, वस्तुव्यङ्ग्यशून्यत्वस्यालङ्कारव्यङ्ग्यशून्यत्वस्य च सम्भवात् चित्रेऽभ्युपगन्तुं शक्यत्वेऽपि रसादिव्यङ्ग्यशून्यत्वे काव्यत्वस्यैवापगमात्। अयम्भावः—काव्यवाक्यानामनर्थकत्वमसङ्गतार्थकत्व वा स्वीकर्त्तुं न शक्यते, तथा सति प्रमत्तवाक्यवदनुपादेयत्वमापद्येत। तस्मात् यत्किञ्चित्सङ्गतार्थबोधकत्वमङ्गी-कर्त्तव्यम्। तावतैव च रसव्यञ्जकत्वमप्यङ्गीकृतमेव। यतो नास्तीदृशो जगति कोऽप्यर्थो यः कस्यचिदपि रसस्योद्दीपनमालम्बनं वा न सम्भवति। ततश्च तद्वारको रससद्भावः प्राप्त इव। तस्मात् सर्वात्मना रसादिव्यङ्ग्यशून्यत्वं काव्यस्य नैव सम्भवतीति।

अथ च केषाञ्चिदाचार्याणा प्रतिपादनानुसारेण सर्वेषा स्थायिभावानां चित्त-वृत्तिरूपतया तद्विशेषा एव रसादय इति यत्किञ्चिच्चित्तवृत्तिजनकत्वमवश्यमेवार्थानाम्, अतोऽपि रसादिव्यञ्जकत्वमर्थबोधककाव्यवाक्याना दुष्परिहरमेव। अन्यथा कवि-

विषयता कविप्रयत्नगोचरतैव, कविप्रतिपाद्यतेति यावत्, चित्रकाव्यस्य न स्यात्। तस्मात् तत्रापि रसादिव्यङ्ग्यसत्त्वं स्वीकार्यमेव। स्वीकृते च तस्मिन् 'व्यङ्ग्यार्थसंस्पर्शरहितत्वम्' इति कथङ्कार सङ्गच्छेत! इति चेत्! समाधीयते— यदा कविरलङ्कारव्यसनितया 'विवक्षा तत्परत्वेन कदाचन' इति सिद्धान्तमनादृत्यालङ्कारमेव मुख्यतया विवक्षति, तदा रसादीना नान्तरीयकव्यङ्ग्यानां सत्त्वेऽपि काव्यवाक्यस्य तच्छून्यत्व वक्तुं शक्यते। यतो हि विवक्षैवार्थानां सत्त्वासत्त्वव्यवस्थापिका काव्येषु, तदाद्यैव चित्रस्य तथाविहित लक्षणमुपपद्यते। यत्र च क्वचिदविवक्षितानामपि रसदीनां वाच्यसौन्दर्यमहिम्नाऽर्थव्यञ्जनासाहाय्येन जायते चित्रेष्वपि 'मध्ये व्योम स्फुरति सुमनोधन्वनः शाणचक्रम्' इत्यादिषु प्रतीतिः। तावता न तस्य चित्रत्वव्याघातो भवितुमर्हति, तत्र रसादीनामविवक्षितत्वात् तत्प्रतीतेरास्वाद्यतमत्ववैधुर्यादिति।

तदुक्तम्—

रसभावादिविषयविवक्षाविरहे सति।
अलङ्कारनिबन्धो यः स चित्रविषयो मतः॥
रसादिषु विवक्षा तु स्यात्तात्पर्यवती यदा।
तदा नास्त्येव तत्काव्यं ध्वनेर्यत्तु न गोचरः॥
[ध्वन्या० ३,५४९]

तदेवं चित्रकाव्यस्य प्रशस्यत्व नास्ति किन्तु लक्ष्यानुरोधात् लक्षणं व्यवस्थापनीयमेव। लक्ष्याणि भूयासि तथाविधानि समुपलभ्यन्ते। भिन्नरुचितया केषाञ्चन कवीनां तत्रापि प्रवृत्तिरलोक्यते। तस्मात् तदपि निरूपणीयमिति दीक्षितैश्चित्रकाव्यस्य मीमासा क्रियते।

निबन्धेऽत्र कतिपयानामेवाङ्कराणा निरूपणं कृतमस्ति न सर्वेपाम्। निरूपणप्रसङ्गे प्राचीनानामालङ्कारिकाणा मत समीक्ष्य प्रत्याख्याय च स्वमतं निर्दुष्ट व्यवस्थापितमस्ति। ग्रन्थस्यास्य भाषाऽतीव प्रसन्ना भाषासर्वदोषविरहिता तार्किकपरिष्कारपद्धतिशीलिता प्रवाहशालिनी वर्तते। विषयविवेचने मनागपि शब्ददारिद्र्यं न लक्ष्यते। पण्डितपुङ्गवेनानेन विरचितस्यालङ्कारनिरूपणपरस्यालङ्कारशास्त्रमूर्द्धन्यस्य **कुवलयानन्दस्य** अपेक्षयास्य भाषाविचारपरिपाटी च तथा प्रौढा गभीरा च वर्तते यथा महीयासोऽपि विद्वासः झटिति आवर्जिता भवन्ति।

कामं प्रसिद्धिं प्राप्तस्य संस्कृतसाहित्यस्य प्रत्येकमङ्गं स्वीयाप्रतिमप्रतिभया पीनतां नयतोऽस्य विदुषः समयादिनिरूपण श्रमायैव केवल कल्पेतेति।

केचन प्रेक्षावन्त' कल्पयन्ति यत् श्रीमदप्पय्यदीक्षिताः कतिपयानेवालङ्कारान् निरमासिपुः, ये चात्र निरूपणीयत्वेनादृताः सन्ति । तत्र च ते प्रमाण प्रदर्शयन्ति यत् दीक्षिता अतिशयोक्तिप्रकरणे ग्रन्थान्ते—

अप्यर्द्धचित्रमीमांसा न मुदे कस्य मासला ।
अनूरुरिव घर्मांशोरर्द्धेन्दुरिव धूर्जटे. ॥

इति श्लोक पठन्तः अर्द्धशब्दमुपात्तवन्तः । तेन प्रतीयते यत् अपूर्ण एव ग्रन्थस्तैर्निर्मितो भवेत् । परन्तु नैतदपरे क्षमन्ते—यतो हि चित्र द्विविधम्—शब्दचित्रम्, अर्थ चित्रञ्च। अत्र च अर्थचित्रमेव निरूपितमस्ति न शब्दचित्रमिति तेन प्रतिपादितपूर्वमस्ति [ चि० मी० पृ० ३९–४० ] इति । अर्थचित्रोद्देशेन 'अर्द्ध'शब्दो वर्तते न तु अपूर्णग्रन्थोद्देशेन । अत एवोत्प्रेक्षानिरूपणावसरे "प्रकारान्तरेणापि कतिचिदस्या भेदान् समासोक्तिप्रकरणे दर्शयिष्यामः" [ चि० मी० ३०६ पृ० ] इति, एव उपमानिरूपणावसरे "अलङ्कारान्तरविविक्तस्तु श्लेषस्य विषयस्तत्प्रकरणे दर्शयिष्यते" [ चि० मी० पृ० ५७ ] इति,

"अधिक निदर्शनालङ्कारप्रकरणे चिन्तयिष्यते" [ चि० मी० ३१६ ] इति च प्रतिपादितम् । अतोऽनुमीयते यत्तेन सर्वेऽपि अपेक्षिता अलङ्कारा निरूपिता भवेयुः, किन्तु सस्कृतसाहित्यस्य दौर्भाग्यात् कियानेवांशोऽत्र समुपलब्धोऽस्तीति तेनैव सन्तोष्टव्य सुधीभिः । अर्द्धपद चात्र शब्दचित्रार्थयोरेकस्या निरूपण-सूचकत्वेन सार्थक न तु ग्रन्थस्यापूर्तिसूचकत्वेन ।

## सुधाटीकाकारः धरानन्दः

ग्रन्थस्यास्य गाम्भीर्यमुपादेयत्वञ्च पर्यालोच्य भरतपुरनिवासिनः वसिष्ठगोत्रोत्पन्नस्य श्रीरामबलमिश्रस्य सुतेन श्रीधरानन्देन सुधोपमा 'सुधा' टीका विरचिता । आद्यावधि 'चित्रमीमासा'निबन्धस्य कापि टीका नासीत् सत्यपि नास्माभिरुपलब्धाऽऽसीदिति विद्वानय सर्वतो भावेन धन्यवादार्होऽस्ति । अनया 'सुधा' व्याख्यया 'चित्रमीमांसा' ग्रन्थस्य निगूढाशयावबोधश्रमजन्यतापतप्ताः परा शान्तिं प्राप्स्यन्ति विद्यार्थिनः ।

ग्रन्थस्य रचना यथा प्रौढा वर्तते तथैव व्याख्याया रचनापि । किन्तु अस्या एकमिद वैशिष्ट्यमस्ति यत् यो हि विषयो ग्रन्थकारेण सम्यक् नालोचितः सक्षिप्य वाऽऽलोचितः सोऽपि विषयः तथा सविशद निरूपित', येनास्य टीका-कर्तृत्व गौण भवति मूलकर्तृत्वञ्च प्रधानम् । यैर्यैराचार्यैः विशेषतो रसगङ्गाधरकारैः

यत्र यत्रायं दीक्षितो यान् यान् दोषानुद्भाव्याधिक्षितः, तांस्तान् दोषान् स्वबुद्धिबलेन प्रौढया युक्त्याऽपाकृत्य परां प्रतिष्ठां नीतः। अनेन टीकाकृता पदे पदे 'अलङ्कारकौस्तुभ'कृतः श्रीविश्वेश्वरपण्डिता न केवलमनुस्रियन्ते, अपि तु अनूद्यन्ते चेति तत्र तत्र टीकावलोकनेन निश्चेष्यन्ति निर्मत्सरा गुणग्राह्या विपश्चितः। टीकेयं लिपिकारप्रमादादतीवाशुद्धाऽऽसीत्, मया च यथामति संशोध्य शुद्धः पाठः कोष्ठके स्थापितः। तत्र यदि मम साफल्यं भवेत् तदाऽहं भगवतो भूतभावनस्यासीमामनुकम्पां मंस्ये विपरीतकल्पनायाः कृते क्षमां च याचिष्ये।

## उपकारस्मरणम्

आदौ वाराणसेयसंस्कृतविश्वविद्यालयस्योपकुलपतीनां विद्यावदातान्तःकरणानां पाश्चात्यपौरस्त्योभयविद्याविशारदानां श्रीमतां सुरतिनारायणमणित्रिपाठिमहाभागानामुपकृतिस्मृतौ शब्ददारिद्र्यमनुभवामि। यतो हि ग्रन्थस्यास्य सम्पादनं दुश्शकमेवाभविष्यत् यदि तेषां कृपा नाभविष्यत्। तेषामौदार्येण मद्रासनगरत आनाय्य मह्यं प्रदत्तमिदं सुधाटीकाया हस्तलिखितं पुस्तकमिति तेषां नैरुज्यं हृदयेनाभिलषामि।

ततोऽनुसन्धानविभागाध्यक्षचरणानां सर्वतन्त्रस्वतन्त्राणां श्रीमतां क्षेत्रेशचन्द्रचट्टोपाध्यायमहोदयानां कृतज्ञतां प्रकाशयामि। यैः पुस्तकस्यास्य प्रकाशनाय महान् प्रयत्नः कृतः, शुभकामना च प्रकटिता। तेषामपि स्वास्थ्यं हृदयेन कामये।

अस्मिन्नवसरे पदवाक्यप्रमाणपारावारीणानां शुद्धस्वान्तानां श्रीमतां रामचन्द्रदीक्षितारमहाभागानामधमर्णतां प्रकटयामि, यैः स्थले स्थले पाठसंशोधने गूढस्य विषयस्य स्पष्टीकरणे ग्रन्थग्रन्थिविभेदने च महत् साहाय्यमाचरितं येन निबन्धस्यास्य परिष्करणे कियतांशेन सफलोऽहं संवृत्तः।

अनेकशास्त्राचार्याः श्रीद्वारकादासशास्त्रिमहोदया अपि सम्प्रति धन्यवादसहस्रैः संयुज्यन्ते यैरनेकधोपकृतमत्र। यदि तेषां साहाय्यं नाभविष्यत् तर्हि पुस्तकस्यास्येदं सौष्ठवं नाभविष्यत्।

विविधविद्याविशारदाः परमसुहृदः श्रीलक्ष्मीनारायणत्रिपाठिमहाभागा अपि कथङ्कारं प्रसङ्गेऽस्मिन् विस्मर्त्तव्या भवेयुः, यैरस्य निबन्धस्य सर्वाङ्गपूर्णप्रकाशनाय महानायासः सोढः।

पालि-साहित्याचार्य श्रीपरमेश्वरपाण्डेयं साहित्याचार्य श्रीचक्रधरभट्ट-महोदयं चाशीस्तुतिभिः सम्बर्द्धयामि यैरस्य ग्रन्थस्य संशोधनादि कर्म महता परिश्रमेण सम्पादितम्। अपरेऽपि सर्वे सुहृदः धन्यवादार्हाः, ये मनसा वचसा कर्मणास्य साफल्यमभिलषितवन्तः।

अन्ते वाणीविहारस्य प्रकाशनाध्यक्षः श्रीकृष्णदत्तद्विवेदिमहाभागोऽनेकै-र्धन्यवादैः संयुज्यते येन हि महामूल्येऽप्यस्मिन् समये दुर्लभस्य ग्रन्थस्यास्य प्रकाशनभारः सोढः संस्कृतसमाजश्चोपकृतः।

**श्रीकृष्णजन्माष्टमी, वि० सं० २०२२**
**वाराणसेयसंस्कृतविश्वविद्यालयः**
**वाराणसी।**

**कालिकाप्रसादशुक्लः**

# विषयानुक्रमणिका

# संक्षिप्तसंकेतविवृतिसूची

| | |
|---|---|
| शिवपु० वा० स | शिवपुराणम्, वायुसंहिता |
| पा० सू० | पाणिनीयसूत्रम् |
| वा० प० | वाक्यपदीयम् |
| का० प्र० उ० | काव्यप्रकाशः उल्लासः |
| वृत्त० र० अ० | वृत्तरत्नाकरः, अध्यायः, |
| ध्व० उ० | ध्वन्यालोकः, उद्द्योतः |
| न्या० सि० मु० | न्यायसिद्धान्तमुक्तावली |
| वैयाकरणसि० ल० म० श० नि० | वैयाकरणसिद्धान्तलघुमञ्जूषा, शक्तिनिरूपणम्, |
| जै० सू० | जैमिनीयसूत्रम् |
| अम० | अमरकोषः |
| रस० आ० | रसगङ्गाधरः आननम् |
| चि० मी० पृ० | चित्रमीमांसा, पृष्ठम् |
| का० | काण्डम् |
| सा० द० परि० | साहित्यदर्पणपरिच्छेदः |
| प्रता० य० रु० अर्था० प्र० पृ० | प्रतापयशोरुद्रीयम्, अर्थालङ्कारप्रकरणम्, पृष्ठम् |
| का० अ० | काव्यालङ्कारः |
| चन्द्रा० श्लो० | चन्द्रालोकः, श्लोकः |
| स० क० परि० | सरस्वतीकण्ठाभरणपरिच्छेदः |
| र० ग० आ० | रसगङ्गाधरः, आननम् |
| भा० परि० | भामहालङ्कारः, परिच्छेदः |
| अलङ्का० स० पृ० | अलङ्कारसर्वस्वपरिच्छेदः |
| नै० | नैषधीयचरितम् |
| भा० पा० सू० | भाष्यम्, पाणिनीयसूत्रम् |
| काशि० पा० सू० | काशिका, पाणिनीयसूत्रम् |
| रघु० | रघुवंशमहाकाव्यम् |
| कुमारसं० | कुमार सम्भवम् |

| | |
|---|---|
| शिशुपा० | शिशुपालबधमहाकाव्यम् |
| रुद्रटाल० | रुद्रटालङ्कारः |
| नवसाहस० चरि० | नवसाहसाङ्कचरितम् |
| ग्र० कृ० | ग्रन्थकृत् |
| महाभा० द्रो० प० | महाभारतद्रोणपर्व |
| काव्या० | काव्यालङ्कारः |
| विक्र० चरि० | विक्रमाङ्कदेवचरितम् |
| अमरु श० | अमरुशतकम् |
| काव्याद० | काव्यादर्शः |
| वाम० सू० | वामनसूत्रम् |
| एकाव० | एकावली |
| माल्तीमा० | माल्तीमाधवनाटकम् |



❀ श्रीः ❀

श्रीमदप्पयदीक्षितप्रणीता

# चित्रमीमांसा

अभिवन्द्य चन्द्रशेखरमाद्यं गौरीसखं परं ज्योतिः।
वितनोमि विपुलविषयां विशदार्थामर्थचित्रमीमांसाम् ॥

## सुधा व्याख्या

यदर्द्धाङ्गं नारी विलसति परा कान्तिरुचिरा
पराङ्गं पुंरूपं जयति च जटाजूटरुचिरम्।
सदा शृङ्गारित्वं वहति वपुषैवं त्रिभुवने
नमस्तस्मै कस्मैचिदखिलविवर्ताय महसे ॥ १ ॥
नत्वा गुरुं कृपासिन्धुं पित्रोश्च चरणद्वयम्।
करोमि चित्रमीमांसाव्याख्यां विद्वन्मुदे सुधाम् ॥ २ ॥
ज्ञात्वा मया विरचित स्फुटलक्षणाना-
मर्थं यथामति गभीरतरं स्वबुद्ध्या।
व्याख्या कृता यदिह को[का]ऽपि सदोषता स्यात्
तत्रापि भूषणकृतिः सुधियां विधेया ॥ ३ ॥

तत्रार्थचित्रमीमांसां करिष्यमाणोऽप्पयदीक्षितः प्रारिप्सितप्रतिबन्धकविघ्नविघाताय—

"शब्दस्वरूपमखिलं[1] धत्ते शर्वस्य वल्लभा।
अर्थस्वरूपमखिलं धत्ते बालेन्दुशेखरः[2]" ॥
[ शिवपु० वा० सं० उ० अ० ४, श्लो० ६६ ]

१. शब्दजालमशेषन्तु—इति पाठान्तरम्।
२. मुग्धेन्दुशेखर.—इति पाठान्तरम्।

सुधा

इत्यादिनोक्तरूपं शिवयोरनुसन्धानात्मक [ मङ्गल ] विरचयन् स्वकीयग्रन्थस्य नाम निबध्नन् [ च ] प्रतिजानीते—**अभिवन्द्येति** । चन्द्रशेखरमभिवन्द्यार्थचित्र मीमांसामहं वितनोमीत्यन्वयः ।

चन्द्रः शेखरे यस्य "सप्तमीविशेषणे बहुव्रीहौ" [पा० सू० २।२।३५] इति व्यधिकरणबहुव्रीहेर्ज्ञापनात् समासः[1] । अत्र चन्द्रस्य शृङ्गारे उद्दीपनविभावतया तदाश्रयतया शिवस्य शृङ्गारित्वं ध्वन्यते । एतस्य पदस्यापि परेभ्यस्तत्पर्यायेभ्यो नितरां रसोपयोगित्वञ्च व्यज्यते । तमभिवन्द्य = स्वावधिकोत्कर्षप्रकारकज्ञानानुकूलव्यापारविषयीकृत्य । एतेन नमस्कारात्मक मङ्गल सूचितम् ।

तत्त्वञ्च विघ्नभिन्नत्वे सति विघ्नध्वसप्रतिबन्धकाभावभिन्नत्वे सति प्रारिप्सितविघ्नध्वसासाधारणकारणत्वम् । जन्यस्यैव कार्यरूपतां प्रतिषेधयन् कारणतां प्रतिपादयति—**आद्यम्** [ इति ] । सर्वकार्याणामाद्यं कारणमित्यर्थः । शृङ्गारित्वपोषकविशेषणमारचयति—**गौरीसखमिति** । गौर्याः सखा इति विग्रहे "राजाहःसखिभ्यष्टच्" [५।४।९१] इति टच्प्रत्ययः । सखित्वकथनेन द्वयोस्साहचर्यस्य सर्वदा सत्त्वाद् गौर्याः स्वाधीनपतिकात्वं व्यज्यते । पारमार्थिकतद्रूपकथनाय विशेषणान्तरमाह—**ज्योतिरिति** । द्योतत इति [2]ज्योतिस्तद्रूपमित्यर्थः । औपाधिकभेदवत्यात्मन्यतिव्याप्तिवारणाय विशेषणम्—**परमिति**[3] । तद्राहित्ये तु लक्षणा[ण]गमन न दोषाय ।

---

१. अयम्भावः—प्रकृतसूत्रेण बहुव्रीहौ सप्तम्यन्तस्य प्राक् प्रयोगो विधीयते । बहुव्रीहिश्च समानाधिकरणानामेव । एवञ्च कण्ठे कालो यस्येत्यादौ व्यधिकरणे बहुव्रीहिसमासविधानाभावेन तत्र सप्तम्यन्तस्य प्राक्प्रयोगविधानं व्यर्थं सञ्ज्ञापयति—'भवति क्वचिद् व्यधिकरणानामपि बहुव्रीहिः' इति ।

वस्तुतः शेखरपदस्यालङ्कारविशेषवाचकत्वस्य कोशादौ दर्शनात् चन्द्रः शेखरो यस्येति समानाधिकरणबहुव्रीहौ बाधकाभावेनात्र ज्ञापकानुसरणप्रयासोऽकिञ्चित्करः ।

२. "द्युतेरिसिन्नादेश्च जः" [ उ. सू. २।११० ] इत्यनेन द्युतधातोः इसिन् प्रत्ययः, दस्य च जः । ज्योतिः प्रकाशस्वरूपम् । प्रकाशरूपत्वञ्चास्य गीतायां व्यवस्थापितम्—"क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत" [ १३।३३ ] इति । "यदादित्यगतं तेजः" [१५।१२] इति च । काठकेऽपि—"नित्योऽनित्यानां चेतनश्चेतनानाम्" ( वल्ली २, १।१३ ). "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" [ २१।१५ ] इत्युक्तम् ।

३. परम्=उत्कृष्टम्, तत्त्वज्ञात्राज्ञानोपाधिशून्यत्वम् । अयम्भावः—सदसद्भ्या-

## सुधा

चिकीर्षितस्य ग्रन्थस्य नाम निबध्नाति—**अर्थचित्रमीमांसामिति**। मीमांसितुमिच्छा मीमांसा, स्वार्थसन्नन्तात् "अ प्रत्ययात्" [३।३।१०२] इत्यप्रत्ययः। शब्दचित्रस्य प्रायो नीरसत्वादर्थचित्रस्य मीमांसा। "षष्ठी" [२।२।८] इति सूत्रेण समासः। अलङ्कृत्युपमादिप्राधान्येन तस्य चमत्कारोपयोगित्वात्। अत एव—

"विनिर्गतं मानदमात्ममन्दिराद् भवत्युपश्रुत्य यदृच्छयापि यम्।
ससम्भ्रमेन्द्रद्रुतपातितार्गला निमीलिताक्षीव भियामरावती" ॥

[ हयग्रीववधनाटकम् ]

---

मनिर्वचनीयं त्रिगुणात्मकं ज्ञानविरोधि भावरूपमज्ञानपदवाच्यम्। तस्य आवरणशक्तिः, विक्षेपशक्तिश्चेति शक्तिद्वयम्। तत्रादित्यमण्डलाच्छादकमेघवदात्मस्वरूपाच्छादिकाऽऽवरणशक्तिः, सर्पादिकोद्भावकरज्ज्वज्ञानवदज्ञानावृतात्मनि आकाशादिप्रपञ्चोद्भाविका विक्षेपशक्तिरिति। एवञ्चावरणशक्तिविक्षेपशक्तिमदज्ञानोपहितचैतन्यस्यैव प्रपञ्चकारणतया कारणान्तराभावेऽपि चैतन्यप्राधान्यविवक्षया निमित्तकारणत्वम्, अज्ञानरूपोपाधिप्राधान्यविवक्षया चोपादानकारणत्वम्; एतदुभयविधकारणत्वशून्यस्य शुद्धचैतन्यस्य बोधनाय परमिति विशेषणम्।

२. हयग्रीवनामा दैत्यो विष्णुना हत इति पुराणकथाश्रिते हयग्रीववधाख्यनाटके हयग्रीववर्णनप्रस्तावे पद्यमेतत्।

यं प्रकृतं हयग्रीवं शत्रूणां मानं द्यति खण्डयति मित्राणां ददाति वा मानदस्तथाभूतम् आत्मनो मन्दिराद् गृहात् न नगरात्, यदृच्छयापि स्वेच्छया न युयुत्सया, विनिर्गतं निःसृतम्, न तु प्रस्थितम्, उपश्रुत्य कर्णाकर्णिकया श्रुत्वा, न तु दूतमुखात्, ससंभ्रमेण सभयेनेन्द्रेण अभ्याहतैश्वर्येण दौवारिकाह्वानविलम्बासहनया स्वयमेव द्रुतं शीघ्रं पातिता यथाकथञ्चिद्विनिक्षिप्ता, न तु विश्रब्धं निहिता, अर्गला द्वारपिधानकाष्ठं यस्यां सा, तथाविधाऽमरावती नगरी, भिया निमीलिते संकुचिते, अक्षिणी यया सा तथाभूतेव भवतीत्यर्थः। 'उपश्रुत्य' इति पातनक्रियासमानकर्तृकत्वमाश्रित्य बोध्यम्। अत्रामरावतीति स्त्रीत्वाध्यवसानमूलोत्प्रेक्षाऽलङ्कारश्चमत्कारविश्रामभूमिः। वंशस्थं वृत्तम्—"जतौ तु वंशस्थमुदीरितं जरौ" इति लक्षणात् इति सुधासागरे भीमसेनदीक्षितः। अधिकं तत एवावमेयम्।

## सुधा

इत्यादावुत्प्रेक्षाप्राधान्येनैवार्थचित्रत्वमिति प्रकाशकारा वदन्ति[1] ।

रसगङ्गाधरकृतस्तु[2]—उत्तमोत्तमोत्तममध्यमाधमभेदात् काव्यं चतुर्विधमङ्गी-कृत्य द्वितीयतृतीययोर्भेदयोर्जागरूकाजागरूकगुणीभूतव्यङ्गययोरखिलम[स्या]लङ्कार-प्रधानकाव्यस्य प्रविष्टतामाहुः ।

ग्रन्थस्येतरग्रन्थेभ्योऽधिकतान्यूनतादोषञ्च निराकरोति—विपुलविषयामिति । विपुलो महान् विषयो निरूपणीयोऽर्थो यस्या सेति विग्रहः । व्याख्यातव्यार्थानाम सङ्कीर्णतामाह—वि[ विशदेति । ] विष[ श ]दोऽतिस्फुटोऽर्थो यस्यामिति विग्रहः । वितनोमि=विस्तारयामि । तनोतेरेव विस्तारे शक्तिः, विपद् द्योतकमेव, निपातानां प्रादीनामुपसर्गाणा च द्योतकत्वाभ्युपगमात्[3] ।

---

१. सू० ४, श्लो० ५, पृ० २२ ।

२. आन० १, पृ० ३३–७१ ।

३. इदमत्राकृतम्—निपातार्थविषये शास्त्रेषु पक्षत्रयं दृश्यते । निपातार्थाना-मनुभवादीनां धातुमात्रतो बोधाभावेनोपसर्गसम्बन्धात्तदवगम इत्युपसर्गाणां विशेषार्थद्योतकत्वमेव । यथा 'अनुभवति' इत्यत्रानुभवरूपस्यार्थस्य 'अनु' शब्दो द्योतकः । तदुक्तं हरिणा—

क्वचित्सम्भविनो भेदाः केवलैरनि[भि]ङ्गिताः ।
उपसर्गेण सम्बन्धे व्यज्यन्ते प्र–परादिना ॥

[ वा० २, १८९ ]

इति प्रथमः पक्षः ।

क्वचिच्चोपसर्गाणां वाचकत्वमपि, यथा—'प्रतिष्ठते' इत्यादौ धातोर्गति-निवृत्तिवाचकत्वम्, 'प्र'शब्दस्य तु गतिवाचकत्वम् । तदुक्तं हरिणा—

'स वाचको विशेषाणां सम्भवाद् द्योतकोऽपि वा ।'

[ वा० २, १९० ]

इति द्वितीयः पक्षः ।

सम्भूय धातूपसर्गावर्थमाहतुः, उपसर्गस्तु शक्तिमात्रं कुरुत इत्यर्था-भिधाने सहकारिण उपसर्गाः । उक्तञ्च वाक्यपदीये—

"शक्त्याधानाय धातोर्वा सहकारी प्रयुज्यते ।" इति ।

[ वा० २, १९० ]

इति तृतीयः पक्षः ।

उक्तेषु त्रिषु पक्षेषु कतमः पक्षः श्रेष्ठ इति मीमांसायामुपसर्गाणां

द्योतकत्वमेव समुचितम्। 'प्रतिष्ठते' इत्यत्र धातूनामनेकार्थत्वात् 'स्था' धातोरेव गतिरर्थः, प्रशब्दस्तु तस्यार्थस्य द्योतकः। तदुक्तं वाक्यपदीये—

स्थादिभिः केवलैर्यच्च गमनादिर्न गम्यते।
तत्रानुमानाद् द्विविधात् तद्धर्मा प्रादिरुच्यते॥ इति।

[वा० २, १९१]

अयमर्थः—तिष्ठतिर्गतिनिवृत्तिं प्रसिद्ध्याऽभिदधाति अतस्तेन केवलेन गमनं न प्रतिपाद्यते। 'अनेकार्था धातव' इति कृत्वाऽनुमानाद् गतिवाचकत्वमपि तस्य व्यवस्थाप्यते। उपसर्गस्तु तद्द्योतक एव। धातूनामनेकार्थत्वमुपसर्गाणाञ्च द्योतकत्वमनुमानेन साधयन्नाह—तत्रेति। अनुमानप्रकारश्च—"धातुः अनेकार्थः, धातुत्वात्; उभयवादिसम्मतानेकार्थयजधातुवत्"; "'प्र' शब्दो द्योतकः, 'प्र' शब्दत्वात, 'प्रपचति' इत्यादिदृष्टप्रशब्दवत्" इति।

एवं चादिनिपातेष्वपि पक्षत्रयं बोध्यम्। तदुक्त हरिणा—

निपाता द्योतकाः केचित् पृथगर्थाभिधायिनः।
आगमा इव केऽपि स्युः सम्भूयार्थस्य वाचका॥ इति।

[वा० २, १९४]

अत्रापि द्योतकत्वपक्ष एव न्याय्यः, केवलानां चादीनामप्रयोगात। यदि वाचकाः स्युस्तदा गवादिवत् केवला अपि प्रयुज्येरन्। तस्मात् 'चादयो न वाचकाः, केवलानामप्रयोगात् प्रत्ययवत्' इत्यनुमानं फलितम्। तदुक्तं वाक्यपदीये—

चादयो न प्रयुज्यन्ते पदत्वे सति केवलाः।
प्रत्ययो वाचकत्वेऽपि केवलो न प्रयुज्यते॥ इति।

[वा० २, १९६]

एवञ्च प्रादीनां चादीनाञ्च निपातानां द्योतकत्वमेवेति हरीणां हृदयम्।

नागेशभट्टस्यापि अयमेव पक्ष इष्टः, मञ्जूषायां पुनः पुनः तस्यैव समर्थनात्।

भट्टोजिदीक्षितप्रभृतयः प्राचीनवैयाकरणास्तु—निपातत्वावच्छिन्नानां सकलनिपातानां द्योतकत्ववाचकत्वे मन्वते। प्रादीनां द्योतकत्वं चादीनां वाचकत्वमेवेति नैयायिकरीतिस्तु न साध्वी, वैषम्ये बीजाभावात्। अत एव द्योतकत्वपक्षं व्यवस्थाप्य—

सुधा

छेकानुप्रासोऽत्र शब्दालङ्कारः, "वर्णसाम्यमनुप्रासश्छेकवृत्तिगतो द्विधा। सोऽनेकस्य सकृत्स[ पू ]र्वः..." इति तल्लक्षणात [ का० प्र० उ० ९, ७९ ]

गोरीसत्वमित्यनेनाभिव्यज्यमाना शिवयो रतिः कविगता रतिं पुष्णातीति देवताविषयकभावध्वनिः। प्रसादो गुणः।

"अतिमात्रेण शब्दानां यत्रार्थप्रत्ययो भवेत्।
[श्रुतिमात्रेण शब्दात्तु येनार्थप्रत्ययो भवेत्]
साधारणः समग्राणा स प्रसादो गुणः स्मृतः" ॥ इति प्रकाशोक्तेः।
[ का० प्र० उ० ८, ७६ ]

कोमला वृत्तिः, "कोमला परैः" [ का० प्र० उ० ९, ८० ] इति लक्षणात। गीतिरत्रच्छन्दः,

"आर्याप्रथमदलोक्त यदि कथमपि लक्षणं भवेदुभयोः।
दलयोः कृतयतिशोभा ता गीतिं गीतवान् भुजङ्गेशः" ॥
इति लक्षणात्।
[ वृत्त०, २, ८ ]

---

"निपातानां वाचकत्वमन्वयव्यतिरेकयोः"
[ वै० भू० निपातनि०, पृ० ३८० ]

इत्यादिना वाचकत्वपक्षोऽपि समर्थितो भूषणादौ।

उपसर्गातिरिक्तनिपाता वाचका द्योतकाश्चेति भगवान् भाष्यकारः। स हि 'अव्ययं विभक्ति०' [ २।१।६ ] इति सूत्रे भाष्ये 'सुमद्राः, सुमगधाः, सपुत्र.' इत्यादावव्ययीभावसमासमाशङ्क्य पूर्वपदप्रधानस्याव्ययीभावत्वेनात्र पूर्वपदप्राधान्यं नास्तीत्युक्त्वा 'अथ वा नेमे समासार्था निर्दिश्यन्ते, किन्तर्हि ? अव्ययार्था इमे निर्दिश्यन्ते। एतेष्वर्थेषु यदव्ययं वर्तते तत्सुबन्तेन सह समस्यते' इत्यवोचत्। कैयटेन चाव्ययस्य श्रुतत्वादन्तरङ्गत्वात् तस्यैव विभक्त्यादयो विशेषणानि। तत्र यदोत्तरपदार्थावच्छिन्नाः समृद्ध्यादयः प्रतिपिपादयिषितास्तदाऽव्ययं समृद्ध्यादीनां वाचकमिति तेषां तदर्थता भवति। सुमद्रा इत्यत्र तु मद्रशब्द एव समृद्धिविशिष्टमर्थमाह, सुशब्दस्तु समृद्धिद्योतको न तु वाचक इत्यादि व्याख्यातम्। अनेन भाष्यकैयटव्याख्यानेन स्पष्टमेव निपातानामुभयं प्रतिभाति। उपसर्गाणान्तु द्योतकत्वमेव।

साऽप्यन्यत्र "गतिर्गतौ" [ ८।१।७० ] इति सूत्रभाष्ये। तत्रत्य-भाष्यन्तु—"ननु पूर्वं धातुरुपसर्गेण युज्यते, पश्चात् स धनेन। नैतत्सारम्..." इत्यादि।

## सुधा

मगणस्य दुष्टफलत्वेऽपि भेद[ भद्र ]वाचकत्वेन न दोषः ।

"देवतावाचकाः शब्दा ये च भेदा[ भद्रा ]दिवाचकाः ।
ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वा" ॥ इत्युक्तेः ।

किञ्च, अनेनैव श्लोकेन शब्दशक्तिमहिम्नार्थान्तरयोरपि ध्वनिः प्रतिपाद्यते । तत्र शृङ्गारस्य विधुदे[ष्णुदे]वताकतया काव्यस्यैव वा तत्स्वरूपतया तमपि नमस्करोति । परमभिवन्द्येत्यन्वयः । पिपर्ति पालयतीति व्युत्पत्त्या परमेश्वरम् । कीदृशम् ? ज्योतिः = आदित्यादिप्रकाशकम् । तस्य प्रकृतोपयोगिविशेषणमाह—गौरीसखमिति । गौरो वर्णोऽस्त्यस्याः, [ इति गौरी, ] गौरादिपाठात् ङीप्[1] । रुद्रा [ रूढ्या ] पार्वतीपरत्वेऽपि ध्यानादौ लक्ष्म्या गौरवर्णस्य प्रसिद्धत्वाद्योगेन श्रीपरत्वेऽपि दोषाभावात् । तस्याः सखेति पूर्ववत्समासः । शोभाप्रत्यायकविशेषणमाह—चन्द्रशेखरमिति । "स्वर्गेऽपि भूरिचन्द्रौ द्वौ"[2] इति [ चन्द्रः ] स्वर्णः सुवर्णमयः शेखरो मस्तकाभरणं यस्य तं परमेश्वरमभिवन्द्य नमस्कृत्यार्थचित्रमीमांसां वितनोमीत्यन्वयः ।

किञ्च शृङ्गारस्यापि रसस्य रसेषु प्रधानतया तस्य ब्रह्मरूपतया तदभिवन्दनमप्यावश्यकमित्यतस्तत्पक्षं प्रतिपादयति—आद्यं सर्वेषु रसेषु प्रथमं परं प्रधानम्, शृङ्गं प्राधान्यमियर्तीति व्युत्पत्त्या तस्य प्राधान्यात् । गौरी नायिका, तस्याः सखा, तदालम्बनत्वेन तदुत्पत्त्या सखित्वाभिव्यक्तिः । तथा चन्द्रः शेखर उद्दीपभू[न]तया प्रधानभूतो यस्येति । तस्याभिवन्दनयोग्यत्वद्योतकं विशेषणमाह—ज्योतिरिति ब्रह्मरूपमित्यर्थः, अलौकिकानन्दरूपत्वात्, "रसो वै सः, रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" इति श्रुतेश्च । यद्यपि वाच्यार्थतया शिवपक्षः एव भासते तथापि व्यञ्जनया तदुपस्थितिः ।

"अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते ।
संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम्" ॥

इति प्रकाशकृदुक्तेरिति दिक्[3] । [ का० प्र० उ० २, सू० ३२ ]

१. पा० सू० ४।१।४१ । २. अ० को० का० ३ । ना० व० । १८२ ।

३. जिज्ञासूनां मनोविनोदाय श्लोकस्यास्य परिष्कृतः शाब्दबोधो निरूप्यते—

उपपत्तिस्तु—चन्द्रशेखरपदोत्तरद्वितीयायाः कर्मत्वशक्तिमानेकत्वञ्चार्थः । तत्रैकत्वस्य समवायसम्बन्धेन चन्द्रशेखरपदार्थे, चन्द्रशेखरपदार्थस्य चाभेदसम्बन्धेन कर्मत्वशक्तिमत्यन्वयः, चन्द्रशेखरपदार्थे च आद्यस्य, गौरीसखस्य परस्य ज्योतिषश्चाभेदसम्बन्धेनान्वयः । अभिपूर्वकवदिधातोः

स्वापकर्षप्रकारकबोधानुकूलो व्यापारोऽर्थः, अस्य च व्यापारस्य विपूर्वकतनुधातुवाच्ये विशेष्यभूते शब्दग्रन्थनानुकूलव्यापारे क्त्वाप्रत्ययस्य समानकर्तृकपूर्वकालिकक्रियावाचकधातोर्विधानात् स्वकर्तृकर्तृकत्व, स्वोत्तरकालिकत्वोभयसम्बन्धेनान्वयः, कर्मत्वशक्तिमतः चन्द्रशेखरपदार्थस्य अभिपूर्वकवद्धात्वर्थफलभूते विशिष्टबोधे समवेतत्वसम्बन्धेनान्वयः। अर्थचित्रमीमांसापदोत्तरद्वितीयायाः कर्मत्वशक्तिमानेकत्वञ्चार्थः, तत्रैकत्वस्य समवायसम्बन्धेन अर्थचित्रमीमांसापदार्थेऽन्वयः, अर्थचित्रमीमांसापदार्थस्य चाभेदसम्बन्धेन द्वितीयार्थकर्मणि अन्वयः, विपुलविषयार्थपदार्थस्य विशदार्थपदार्थस्य च अभेदसम्बन्धेनार्थचित्रमीमांसापदार्थेऽन्वयः, द्वितीयार्थकर्मणः विपूर्वकतनुधात्वर्थग्रन्थनरूपे फले आधेयत्वसम्बन्धेनान्वयः, तस्य फलस्य च अनुकूलत्वसम्बन्धेन धात्वर्थव्यापारेऽन्वयः, तत्रैव चाख्यातार्थस्याश्रयस्य वृत्तित्वसम्बन्धेन वर्तमानकालस्यावच्छिन्नत्वसम्बन्धेन अन्वयः आश्रये आख्यातार्थैकत्वस्य, समवायसम्बन्धेन आक्षिप्तस्य ग्रन्थकर्तुः अभेदसम्बन्धेनान्वयः।

एवञ्च—अभेदसम्बन्धावच्छिन्नाद्यत्वावच्छिन्न-परत्वावच्छिन्न-ज्योतिष्ट्वावच्छिन्न-गौरीसखत्वावच्छिन्नप्रकारतानिरूपितसमवायसम्बन्धावच्छिन्नैकत्वत्वावच्छिन्नप्रकारतानिरूपितचन्द्रशेखरत्वावच्छिन्नविशेष्यत्वावच्छिन्नाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितकर्मत्वावच्छिन्नविशेष्यत्वावच्छिन्नसमवेतत्वसम्बन्धावच्छिन्नकर्मत्वावच्छिन्नप्रकारतानिरूपितस्वापकर्षप्रकारकबोधत्वावच्छिन्नविशेष्यत्वावच्छिन्नानुकूलत्वसम्बन्धावच्छिन्नतादृशबोधत्वावच्छिन्नप्रकारतानिरूपितव्यापारत्वावच्छिन्नविशेष्यत्वावच्छिन्नस्वकर्तृकर्तृकत्व—स्वोत्तरकालिकत्वोभय-सम्बन्धावच्छिन्नव्यापारत्वावच्छिन्नप्रकारता निरूपिता, अभेदसम्बन्धावच्छिन्नविपुलविषयत्वावच्छिन्नविशदार्थत्वावच्छिन्नप्रकारतानिरूपित—समवायसम्बन्धावच्छिन्नैकत्वत्वावच्छिन्नप्रकारतानिरूपितार्थचित्रमीमांसात्वावच्छिन्नविशेष्यत्वावच्छिन्नाभेदसम्बन्धावच्छिन्नार्थचित्रमीमांसात्वावच्छिन्नप्रकारतानिरूपितकर्मत्वावच्छिन्नविशेष्यत्वावच्छिन्नाधेयत्वसम्बन्धावच्छिन्नग्रन्थनत्वावच्छिन्नविशेष्यत्वावच्छिन्नानुकूलत्वसम्बन्धावच्छिन्नग्रन्थनत्वावच्छिन्नप्रकारता निरूपिता च या अभेदसम्बन्धावच्छिन्नग्रन्थकर्तृत्वावच्छिन्नप्रकारतानिरूपितसमवायसम्बन्धावच्छिन्नैकत्वत्वावच्छिन्नप्रकारतानिरूपिताश्रयत्वावच्छिन्नविशेष्यत्वावच्छिन्नवृत्तित्वसम्बन्धावच्छिन्नाश्रयत्वावच्छिन्नप्रकारतानिरूपिता च

**त्रिविधं तावत्काव्यम्, ध्वनि-गुणीभूतव्यङ्ग्य-चित्रभेदात् ।**

**सुधा**

अथ निरूपणीयानामलङ्काराणामाश्रयभूतं यत्काव्यं तस्य विभागमाह—**त्रिविध-मिति** । तावदिति प्राथम्येऽव्ययम्, वाक्यालङ्कारे वा । काव्यं लोकोत्तरवर्णनानिपुणस्य कवेरसाधारणं वर्णनात्मकं कर्म । तद् ध्वनिगुणीभूतव्यङ्ग्यचित्रभेदात् त्रिविधमित्यनुषङ्गः ।

यद्यप्यत्र काव्यलक्षणमन्यत्र प्रसिद्धत्वान्न विचारगो[वि]षयीकृतं तथापि सर्वोपकारकत्वात् प्रकृतोपयोगित्वादलङ्काराणामपि तदुत्कर्षाधायकत्वाद[स्मा]भि-र्विचार्यते— शक्तिलक्षणाव्यञ्जनान्यतमावच्छिन्नान्यतर[म]त्वविशिष्टोपनागरिकादिरीतिमत्त्वे सति, उत्कर्षाधायकगुणालङ्कारविशिष्टशब्दार्थत्वं काव्यत्वम् । 'घटं भिन्द्यात् पटं छिन्द्यात्' इत्यादावतिव्याप्तिवारणायोत्तरद[ल]म्, राधया कृष्णः क्रीडतीत्यादावति-व्याप्तिवरणाय सयत्नोपादानमिति ।

**प्रकाशकारस्तु**—"तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि" [ का० प्र० उ० १, सू० १ ] इत्याह । प्रागुक्तवर्णनात्मकत्वदयतावच्छेदकस्य शब्दार्थो-भयाश्रितत्वाभावात् कविप्रौढोक्तिकल्पितत्वादेरर्थ एव सद्भावादेकत्र विनिगमना-भावादुभयोरेव काव्यत्वम् । तत्राजाद्यदन्तत्वादर्थशब्दस्य पूर्वनिपाते प्राप्ते "नामरूपे व्याकरवाणि" [ छा० ६।३।२ ] इति श्रुतेः, "वागर्थाविव सम्पृक्तौ" [ रघु० स० १. श्लो० १ ] इति लौकिकप्रयोगाच्च शब्दस्यैव प्राथम्यम् । रसोद्बोधजनकतावच्छेदक-क[?]त्वस्य दोषाभावगुणालङ्कारविशिष्टयोः शब्दार्थयोर्वृत्तित्वात्तादृशयोरेव तयोर्ज्ञाने रसोत्पत्तेः । लोकेऽपि काणत्वादिदोषाभावेन पाण्डित्यसौन्दर्यादिगुणैर्वस्त्रालङ्कारादि-परिच्छेदेन च शिष्टस्यैव दर्शनाच्चित्तचमत्कारः, न त्वेकदेशवैकल्येन । अत एव विशेषणत्रयमपि सार्थकम् ।

यत्त्वा[ग्नि]**ग्निपुराणे व्यासैरुक्तम्**—

> "अदोषं गुणवत्काव्यमलङ्कारैरलङ्कृतम् ।
> रसान्वितं कविः कुर्वन् कीर्तिं प्रीतिं च विन्दति" ॥ इति ।

काव्यं शब्दार्थयुगलं यतोऽदोषादिविशेषणत्रयविशिष्टमतो रसान्वितम् । नात-स्तद्बलात् सदोषादेस्तत्त्वम् । एवं विशिष्टशब्दार्थयोः काव्यत्वे सिद्धे 'काव्यं पठति, शृणोति' इत्यादिव्यवहारः शब्दपरतया समर्थनीयः । काव्यं बुद्धमिति[1] तु अर्थस्य

---

या परिच्छेदकत्वसम्बन्धावच्छिन्नवर्तमानकालत्वावच्छिन्नप्रकारतानिरूपिता च या व्यापारत्वावच्छिन्ना विशेष्यता तादृशविशेष्यताशाली शाब्दबोधः ।

१. व्यवहारस्तु इति शेषः ।

सुधा

त्त्वसमर्थकः। 'अदोषौ' इत्यत्रापि दोषसामान्याभाव एव, तस्य निरलविषयत्वे इष्टापत्तेः। 'द्वित्राण्येव काव्यानि, द्वित्रा एव कवयः' [ध्व० उ० १, पृ० ३२] इति ध्वनिकारोक्तेः[1]। 'तथाभूताम्' इत्यादौ 'न्यक्कारो ह्ययमेव' इत्यादौ [च] निर्दोषे तदेकदेशे योजनादिघटिते वा ध्वनित्वमव्याहतम्, यदवच्छेदेन यावद्दोषाभावस्तदवच्छेदेन काव्यत्वोपगमात्। दुष्टं काव्यमिति व्यवहारस्तु दुष्टो हेतुरितिवत्।

१ तत्रत्यानुपूर्वी तु—"येनास्मिन्नतिविचित्रकविपरम्परावाहिनि संसारे कालिदासप्रभृतयो द्वित्राः पञ्चषा वा महाकवय इति गण्यन्ते"।

२. तत्र प्रथमः सम्पूर्णश्लोकः—

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां,
वने व्याधैः सार्द्धं सुचिरमुषितं वल्कलधरैः।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु॥

[वेणी० १, ११]

कुरुनिग्रहे औदासीन्यं भजन्तं युधिष्ठिरमुपालभमानं भीमं प्रति सहदेवस्य 'आर्य! कदाचित् खिद्यते गुरुः' इत्युपालम्भानौचित्यप्रदर्शनपरस्य वाक्यस्योत्तरे 'गुरुः किं खेदमपि जानाति' इत्युपक्रम्य भीमोक्तिः—नृपसदसि राजसभायां कौरवैः कृतो योऽपमानः, स नाप्येकान्ते, नापि यत्र कुत्रचित्, अपि तु सभायाम्, तत्रापि राजसभायाम्, तथाभूतां कृतकेशाम्बराकर्षणां पाञ्चालतनयां द्रौपदीं दृष्ट्वा वने वल्कलधरैर्वृक्षत्वक्परिधानशीलैर्व्याधैर्लुब्धकैः सार्द्धं सुचिरमुषितं ज्ञात्वा, विराटस्य मत्स्याधिपस्यावासेऽनुचितकन्यानर्तन-गोपालन-पाचकादिरूपोद्योगगुप्तं स्थितं स्वयमनुभूयापि च महाराजः खिन्ने मयि भीमे खेदं दुःखं भजति, अद्यापि सम्प्रत्यपि कुरुषु न भजतीत्यहो आश्चर्यम्। शिखरिणी छन्दः, "रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणी" [वृ० र० ३, ९०] इति लक्षणात्। अत्र न्यूनपदत्वदोषः।

रामेण राक्षसेषु हन्यमानेषूद्विग्नस्य रावणस्य स्वावमाननोक्तिः। सम्पूर्णः श्लोकस्तु—

न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः।

सुधा

न चैकस्य काव्यत्वमकाव्यत्वम्', उपाधिसङ्करे दोषाभावात्, जातावेव तद्दोषात्।

धिग्धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ॥

[ हनुमन्ना०, अ० १४. ]

अयमेव मे न्यक्कारोऽपमानो यदरयः सन्तीति शेषः। अन्येषां पराभवादिः मम तु रिपुसम्बन्ध एव न्यक्कार इति तात्पर्यम्। मेऽरयः, न एको द्वौ वा। पूर्वमेकोऽपि नासीत्, सम्प्रति युगपदेव बहवो जाता इति बहुवचनेन ध्वन्यते। तत्राप्यसौ मानुषः, सोऽपि तापसः=शस्त्रानभिज्ञः, सोऽप्यत्रैव मत्समीप एव राक्षसकुलमाबालवृद्धं सर्वं निहन्ति=नितरां मारयति। जीवत्यहो रावणः। अहो महदाश्चर्यम्! एवंविधेऽपि पराभवातिशये क्रोधाग्निनिर्दग्धोऽपि रावणो न भस्मीभवतीति भावः। धिग्धिक् शक्रजितम्। वीप्सया निन्दातिशयो व्यज्यते। प्रबोधितवतेति णिजन्ताद्भावे क्तान्तो मतुप् न तु क्तवतुप्रत्ययः, कर्मणि तस्यासाधुत्वात्। उत्थापितेन कुम्भकर्णेन वा किम्। न किञ्चित् फलम्! स्वर्ग एव ग्रामटिकाऽल्पग्रामस्तस्या विलुण्ठनेन विध्वंसनेन वृथोच्छूनैरेभिर्भुजैः किम्! बहुवचनेन शत्रोर्भुजद्वयं मम तु बहवो भुजास्तथापि वैकल्यमिति ध्वन्यते।

श्रीवत्सलाञ्छनभट्टाचार्यास्तु—जीवतीति काका न जीवतीत्यर्थ इत्याहुः। शार्दूलविक्रीडितं छन्दः। अविमृष्टविधेयांशदोषः। अत्र प्राप्तमरिमत्त्वम् 'अयम्' इत्यनूद्याप्राप्तं न्यक्कारत्व विधीयते। अतोऽयमेव न्यक्कार इति वाच्यम्; 'अनुवाद्यमनुक्त्वैव नाभिधेयमुदीरयेत्' इति वृद्धवचनात्। अन्यथा तु वैपरीत्येन विलम्बेन वा तथाभावः प्रतीयेत। 'अयं न्यक्कारः' इत्युभयोः पदयोर्दुष्टत्वाद् वाक्यदोषत्वम्।

अपि च, 'वृथोच्छूनैः' इत्यसङ्गतम्, उच्छूनत्वमात्रस्यैवानुवादौचित्यात्, न तु वृथात्वविशेषितस्य, 'किमेभिः' इत्यनेन वृथात्वस्यैव विधेयत्वात्।

अत्रोभयत्र प्रतिपदजीवातुव्यङ्ग्यप्रतीत्यादेर्दोषज्ञानतिरोधानात्तादृशव्यङ्ग्यवैचित्र्यप्रतीतिविरहविशिष्टदोषज्ञानस्यैव विरोधित्वेन सतोऽपि वा दोषज्ञानस्याविरोधित्वाद् ध्वनित्वमव्याहतम्। यस्य न व्यङ्ग्यवैचित्र्यप्रतीतिस्तं प्रति दोषत्वमेवेति दोषप्रदर्शनमप्यविरुद्धम्—इति सन्दर्भाशयः।

१. च स्यादिति शेषः।

सुधा

सगुणपदं गुणव्यञ्जकवर्णपरम्, स्वव्यङ्ग्यास्वादसमवायेन परम्परया वा। तेन गुणानां रसनिष्ठत्वेऽपि नासम्भवः।

**अनलङ्कृतीति।** अस्फुटत्वरूपमल्पत्वं नञर्थः[1]। क्वापीत्यनेन सर्वत्र सालङ्कारत्वम्। 'सालङ्कारौ' इति पदोपादानन्तु अलङ्कारमात्रशून्यस्य न काव्यत्वमिति मतमिति प्रतिपादनार्थं न कृतम्। अस्फुटालङ्कारस्यापि रसादिस्फुटत्व एव काव्यत्वं न तु सर्वत्र। नीरसे तु तादृशे न तत्त्वम्, रसादेरलङ्कारस्य च चमत्कृतिहेतुत्वात्, काव्यस्य तत्सारत्वाच्च। तथा च स्फुटालङ्काररसान्यतरवत्त्वं विशेषणमिति भावः। निरलङ्कारे रसवति—

"मुनिर्जयति योगीन्द्रो महात्मा कुम्भसम्भवः।
येनैकचुलुके दृष्टौ दिव्यौ तौ मत्स्यकच्छपौ"॥

[ ध्व०—उ० ४, पृ० ६२४ वृत्तिः ]

इत्यत्र काव्यत्वस्येष्टत्वात्। एकत्र चुलुके मत्स्यकूर्मदर्शनरूपस्य हेतोरुत्कर्षे सत्त्वेऽपि न काव्यलिङ्गम्, रसाननुगुणत्वात्तदभावे तद्दर्शनरूपार्थस्य तद्रसव्यञ्जकत्वात्।

"अद्रावत्र प्रज्वलत्यग्निरुच्चैः प्राज्यः प्रोद्यन्नुल्लसत्येष धूमः।"

इत्यादावोजोगुणानुमानालङ्कारसत्त्वेऽपि न काव्यत्वं विभावाद्यर्थानुपस्थापकत्वात्, तदुपस्थापकशब्दार्थयोरेव तत्त्वौचित्यात्। तथा च रसप्रतिबन्धकदोषत्वावच्छिन्नात्यन्ताभावत्वावच्छिन्नव्यङ्ग्यव्यञ्जकपरम्परासम्बन्धान्यतरसम्बन्धेन गुणविशिष्टचमत्कृतिहेतुत्वावच्छिन्नस्फुटालङ्काररसान्यतरवच्छब्दार्थत्वं तत्त्वमिति **जयरामभट्टाचार्यमतानुयायिनः।**

---

**१. तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।**
**अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः॥ इत्युक्तेः।**

**क्रमेणोदाहरणानि—अब्राह्मणः = ब्राह्मणसदृशः, अपापम् = पापाभावः, अनश्वः = अश्वभिन्नः, अनुदरा कन्या = अल्पोदरा, अपशवः = अप्रशस्ताः पशवः, अधर्मः = धर्मविरुद्धः।**

**इदं सर्वं भेदप्रतियोगित्वप्रकारकब्राह्मणादिबोधानन्तरभाविनं मानसबोधमभिप्रेत्योक्तम्, ब्राह्मणादिबोधस्य तत्तत्पदादेव सम्भवाद् भेदप्रतियोगित्वेन ब्राह्मणादिबोधनाय यद्ब्राह्मणादिपदोपादानं तत्सादृश्यादिना क्षत्रियादिबोधनार्थमित्यूहमूलकक्षत्रियादिबोधस्य भेदप्रतियोगी ब्राह्मण इत्यादिशब्दार्थबोधोत्तरमेव सम्भवादित्याशयः।**

सुधा

केचित्तु—यथाशक्ति दोषव्यावर्त[ वृत्त ]ये दोषपदम्, दोषाणामपकर्षमात्राधायकत्वेन काव्यस्वरूपानुपघातकत्वात्, रत्नादौ कीटवेधवत् आस्वादवति दुष्टेऽपि तदङ्गीकारात्। अन्यथा दोषनिरूपणप्रकरणे अन[ न्यून ]पदत्वेन दूषितस्य काकुसहकृतार्थव्यङ्ग्यध्वनिना "तथाभूताम्" इत्यादेस्तृतीयोल्लासे[1] प्रतिपादिता विरुद्ध्येत।

ध्वनिकृतापि[ मपि ]अविमृष्टविधेयदोषदुष्टस्य 'न्यक्कारो ह्ययम्' इत्यादेर्ध्वनित्वम्, 'दुष्टं काव्यम्' इति व्यवहारोऽपीत्थं सङ्गच्छत इत्याहुः[2]। काणत्वादिदोषेण पुरुषस्येव स्वरूपहानेरभावेऽपि चमत्कृतिजनकत्वायोग्यत्वेनाकाव्यतापत्तेः, तस्य तदेकप्रधानत्वात्। तत्रापि दोषाणां निराकरिष्यमाणत्वाच्च।

**सुबुद्धिनाथमिश्रास्तु**—स्फुटदोषराहित्यमदोषपदस्यार्थः। स्फुटत्वञ्च कविप्रतिभातिरोधानाशक्यत्वम्। अस्ति प्रतिभावता काव्ये कश्चन विशेषो यत सामाजिकाश्चित्रार्पितानिव कृत्वा दोषं न ग्राहयन्तीत्याहुः। तदप्यसत्, विशेषपरत्वे प्रमाणाभावात्। काव्यसामान्यस्य प्रतिभाजन्यत्वेन कुत्रापि दोषग्रहणानापत्तेः। एवञ्च 'न्यक्कारो ह्ययम्' इत्यादीनामुत्तमतया प्रतिभाजन्यत्वेन दोषाभिधानं विरुद्धमिति चेदत्र वदन्ति—अस्फुटानां तेषां रसोद्बोधाविरोधित्वेन तदभावस्य लक्षणाघटकतया स्फुटानामेव तद्विघातकत्वेन तदभाव एव लक्षणघटक इति दिक्।

अत्र **चण्डीदासमतानुयायिनो दर्पणकृतस्तु**[3]—दोषरहितस्यैव काव्यत्वे 'न्यक्कारो ह्ययम्' इत्यादावविधेयविमर्शसत्त्वेनाव्याप्त्यापत्तेः। क्वचिद्दोषवत्त्वे क्वचिददोषवत्त्वे काव्यत्वाकाव्यत्वाभ्यामा [ कृष्यमाणं ] किमपि न स्यात्, काव्यस्य विरलविषयत्वापत्तेश्च। सर्वथाऽदोषस्याभावेन निर्विषयत्वापत्तेश्च। नञ ईषदर्थे शक्तौ दोषाभाववति काव्यत्वानापत्तेः। सति सम्भवे 'ईषद्दोषौ' इत्यपि न वाच्यम्, उपचारतया रत्नादिस्वरूपस्य कीटादिवेधानामिव तत्स्वरूपस्य दोषैरव्याघातात्। तयोः सगुणत्वविशेषणमप्यसत्। "ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः" [ का० प्र० उ० ८, ६६ ] इत्यादिना तेषां रसनिष्ठत्वप्रतिपादनात्। रसाभिव्यञ्जकत्वेन तत्सार्थक्यं न सम्भवति। गुणैस्तदन्वयव्यतिरेकनियमेन 'सरसौ' इत्यस्य

१. काव्यप्र० श्लो० १५, पृ० ७४।

२. इदं पदं 'निराकरिष्यमाणत्वाच्च' इत्यस्याग्रे लेखनीयम्, 'इत्याहुः' इत्यतोऽग्रेतनस्यांशस्य 'केचित्तु' इत्यस्य मतत्वेनैवेष्टत्वात्।

३. साहित्यदर्पणः, परि० १, पृ० १२–१९।

सुधा

आवश्यकत्वे तद्व्यर्थत्वापत्तेः। 'प्राणिमन्तो देशाः' इति वक्तव्ये शौर्यादिमन्तो देशा इति कथनस्य व्यर्थत्वात्। अलङ्काराणामुत्कर्षमात्राधायकत्वेन स्वरूपानुपयोगात्त-द्विशेषणस्यापि व्यर्थत्वाच्च। तस्मात् 'रसात्मकं वाक्यं काव्यम्' इत्येव तल्लक्षणमिति वदन्ति। तदसत्; वस्त्वादिप्रधाने काव्येऽव्याप्त्यापत्तेः[1]। न चेष्टापत्तिः, महाकवि सम्प्रदायस्याकुलीभावप्रसङ्गात्, जलप्रवाहवेगनिपतनादेः कषि[ पि ]षा[ बा ] लादिविलसिताना[ च ] कविवर्णितत्वात्। तत्रापि परम्परया कथञ्चिद्रसाङ्गीकारे 'गौश्चलति' इत्यादावतिव्याप्त्यापत्तेः।

यत्तु दोषरहितस्यैव तत्त्वे 'न्यक्कारो ह्ययम्' इत्यादौ विधेयाविमर्शसत्त्वेन तत्त्व व्याघात इति, तन्न, अन्येषां पराभवे [ वो ] ममारिसम्बन्ध एव न्यक्कारः। बहुवचनेन बहवोऽरय इत्यनुतापातिशयः। तापसपदोपादाने[ न ] तु तस्या-शिक्षितास्त्रत्वव्यञ्जनात्। सोऽप्यत्रैव = सकलराक्षसपरीतायां लङ्कायामेवेति तिर-स्कारातिशयः। रक्षन्ति परानिति यौगिकार्थाभावेऽपि स्वस्यापि रक्षणेऽसमर्थो जीवतीति सोत्प्रासकाक्वा स्वनामसङ्कीर्तनं वीररसस्थायितिशयं पुष्णातीति प्रतिपद-व्यङ्ग्यसत्त्वेन तत्सत्त्वात् स्वाधिक्यकीर्तनार्थं स्वसंज्ञोच्चार एव दूषणसत्त्वात्।

यत्तु—'क्वचिद् दोषवत्त्वे' इत्यादि, तदपि न, एकस्यापि ज्ञानस्य भ्रमत्व-प्रमात्ववदेकस्याप्युभयत्वाङ्गीकारसत्त्वात्। न च सङ्करः, उपाधौ तस्येष्टत्वात्, जातावेव तद[ न ]ङ्गीकारात्[2]।

---

१—मदुक्तकाव्यलक्षणन्तु तत्र रसाभावेऽपि स्वभावोक्त्यलङ्कारसत्त्वात् व्याप्नुयादेवेति शेषः।

२. अयं भावः—स्वसामानाधिकरण्य–स्वाभावसामानाधिकरण्य–स्वसमानाधि-करणात्यन्ताभावप्रतियोगित्वैतत्त्रितयसम्बन्धेन जातिविशिष्टत्वं साङ्कर्यम्। एतादृशस्य साङ्कर्यस्य, क्वचिदन्यतरस्य प्रबलप्रमाणेन जातित्वे निर्णीते, इतर-स्यैव जातित्वबाधकत्वम्। यथा गन्धसमवायिकारणतावच्छेदकतया प्रत्यक्ष-प्रमाणेन च पृथिवीत्वस्य जातित्वे निर्णीते तेन सह साङ्कर्यादिन्द्रियत्वं न जातिः। तथा हि—स्वं पृथिवीत्वम्, तत्सामानाधिकरण्यं घ्राणे इन्द्रियत्वस्य. पुनः स्वं पृथिवीत्वम्, तदभावसामानाधिकरण्यं रसनायामिन्द्रियत्वस्य, पुनः स्वं पृथिवीत्वम्, तदधिकरणघटवृत्त्यत्यन्ताभावप्रतियोगित्वमिन्द्रियत्वस्य, इत्येतत्त्रितयसम्बन्धेन पृथिवीत्वविशिष्टत्वमिन्द्रियत्वे जातित्वबाधकम्। एवञ्च 'इन्द्रियत्वं न जातिः, उक्तसम्बन्धत्रयेण जातिविशिष्टत्वात्' इत्यनु

मानाद् इन्द्रियत्वस्य जातित्वाभावः सिद्ध्यति। एवञ्च इन्द्रियत्वे जातित्वग्रहं प्रति जातित्वाभावग्रहः प्रतिबन्धकः, जातित्वाभावग्रहे च लिङ्गज्ञानविधया जातिविशिष्टत्वात्मकसाङ्कर्यस्य हेतुतया जातित्वज्ञानप्रतिबन्धकजातित्वाभावज्ञानजनकत्वेन गौणप्रतिबन्धकत्वम्, जातित्वाभावात्मकसाध्यव्याप्यवत्तानिश्चयत्वेन च मुख्यप्रतिबन्धकत्वम्। जातिविशिष्टत्वात्मकसांकर्यस्य जातित्वाभावव्याप्यत्वे तु ब्रह्मक्षत्रादीनामेकतरबीजेनापरक्षेत्रे उत्पादितस्य शरीरस्य ब्रह्मत्वक्षत्रियत्वाद्यात्मकजातिद्वयनिरसनपरस्मृतिपुराणान्येव प्रमाणम्।

भूतत्वमूर्तत्वयोस्तु अन्यतरस्य जातित्वसमर्थकप्रबलप्रमाणाभावेनोभयोरपि तथात्वे सांकर्यं बाधकम्। ननु सांकर्यस्य जातित्वबाधके किम्मानमिति चेत्, न; स्वसामानाधिकरण्य-स्वाभावसामानाधिकरण्योभयसम्बन्धेन जातिविशिष्टजातित्वव्यापको यः स्वसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभावः, तद्रूपनियमस्य भङ्गस्यैव मानत्वात्। तथा हि घटे घटत्वसमानाधिकरणं पृथिवीत्वम्, पटे च घटत्वाभावसमानाधिकरणं पृथिवीत्वमिति तादृशोभयसम्बन्धेन घटत्वविशिष्टा पृथिवीत्वजातिः, तत् पृथिवीत्वं घटत्वव्यापकम्। साङ्कर्यस्थले जातित्वस्वीकारे तादृशस्य नियमस्य भङ्गापत्तिः स्यात्। उपाध्योस्तु साङ्कर्यं न जातित्वबाधकम्।

तादृशनियमे प्रमाणाभावात् साङ्कर्यं न जातिबाधकमिति नव्याः।

[ न्या० सि० मु० दिनकरी. पृ० ७७–७८ ]।

वैयाकरणास्तु—यत्र स्वव्यापकात्यन्ताभावप्रतियोगित्वसम्बन्धेन जात्योः परस्परवैशिष्ट्यं तत्रैव यदि साङ्कर्यं तदा तस्य जातित्वबाधकत्वम्। यथा नरत्वव्यापकात्यन्ताभावप्रतियोगित्वं सिंहत्वे; एवं सिंहत्वव्यापकात्यन्ताभावप्रतियोगित्वं नरत्वे; 'यत्र यत्र नरत्वं तत्र तत्र सिंहत्वाभावः, यत्र यत्र सिंहत्वं तत्र तत्र नरत्वाभावः' इति व्याप्तेः। एवञ्च ते जाती यदि नरसिंहे स्वीकृते स्यातां तदा साङ्कर्यलक्षणाक्रान्तत्वात्तयोर्जातित्वं न स्यादिति तत्र विलक्षणैव काचन जातिः, न नरत्वं नापि सिंहत्वम्।

आश्रययोर्भेदभङ्ग एव हि साङ्कर्यस्य दूषकताबीजम्। यथा 'नरो न सिंहः, सिंहो न नरः' इति नरत्वाश्रयसिंहत्वाश्रययोर्भेदस्य यो भङ्गः, स एव दोषः। यदि नरत्वं सिंहत्वञ्च क्वचिदप्येकत्र स्वीकृतं स्यात्तदा तत्र 'नराभिन्नः सिंहः' इति तादात्म्यसम्भवाद् भेदो भज्येतेति भावः।

सुधा

तद्विरलविषयत्वे त्विष्टापत्तेः, द्वित्राण्येव काव्यानीति ध्वनिकारोक्तेः[1]।

यत्तु शे[दो]षैर्न स्वरूपव्याघातः, तदपि न; तेषां रसापकर्षकत्वेन न्यूनत्वापत्तौ तत्सत्त्वम् [त्वात्], तत्रापि काव्यत्वे लक्षणस्य व्यर्थत्वापत्तेश्च। सगुणत्वविशेषणमपि आवश्यकम्, तेषां रसाभिव्यञ्जकवर्णपरत्वेन तेषामभावे स्वरूपव्याघातापत्तेः। अलङ्काराणामपि पृथक् चमत्कृतिजनकत्वेन तद्विशेषणस्याप्यावश्यकत्वात्, रसाद्यलङ्कारयोस्तज्जनकतायाः प्रदीपादिसम्मतत्वाच्चेति दिक्।

कविकर्म काव्यमिति यौगिकरूपसमाख्या[2]बलाद्विभावादिद्योतकशब्दस्यैव तत्त्व नार्थस्य, तस्य तत्कृत्यसाध्यत्वात्। अत एवाभ्यर्हित[स्य] तस्य प्राङ्निर्देशः।

---

गन्धसमवायिकारणतावच्छेदकतया पृथिवीत्वस्य सुखादिसाक्षात्कारकारणतावच्छेदकतया शरीरत्वस्य च जातित्वसिद्धेः। 'पृथिवी शरीरम्' इति व्यवहारसत्त्वादाश्रयभेदभङ्गाभावात्।

समवायसम्बन्धावच्छिन्नक्रियात्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकतया लाघवाद् यथा मूर्त्तत्वं जातिः कल्प्यते, तथा भूतपदनिष्ठशक्ततानिरूपितपृथिव्यादिनिष्ठशक्यतावच्छेदकतयापि भूतत्वं जातिर्लाघवात् सेत्स्यति। यथा व्याप्यव्यापकभावापन्नजात्योः सामानाधिकरण्यं न दोषावहं किन्तु व्याप्तिप्रयोजकत्वेन गुण एव, तथा भूतत्वमूर्त्तत्वयोः साङ्कर्यमिष्टमेवेति भावः।

[ वैयाकरण सि० ल० म० श० नि०, पृ० ७६–७७ ]

१—ध्वन्या० उ० १, पृ० ३४।

२—यौगिकशब्दः समाख्या। सा द्विविधा—लौकिकी वैदिकी चेति। तत्र लौकिकी=सूत्रकारैः परिकल्पिता, यथा—याज्यापुरोनुवाक्यापाठादीनि कर्माणि ऋग्वेदे प्रतिपादितानि, दोहननिर्वापादीनि यजुर्वेदे, आज्यस्तोत्रपृष्ठस्तोत्रादीनि सामवेदे। तत्र केन कानि कर्माणि संपादनीयानीत्यत्र नियामकस्य दुर्निरूपत्वाद् येन केनापि ऋत्विजा यानि कान्यपि कर्माणि सम्पादनीयानीति प्राप्ते 'हौत्रम्, आध्वर्यवम्, औद्गात्रम्' इति लौकिक्या समाख्यया नियमो विज्ञायते।

इदमत्राकूतम्—य ऋग्वेदेन कर्म करोति स होता, यो यजुर्वेदेन सोऽध्वर्युः, यः सामवेदेन स उद्गाता। एवञ्च—होतुः कर्म हौत्रम्, अध्वर्योः कर्माध्वर्यवम्, उद्गातुः कर्म औद्गात्रम्—इति योगबलरूपया समाख्यया यथाक्रमम् ऋग्वेदप्रतिपादितेषु कर्मसु होतुः, यजुर्वेदप्रतिपादितेषु अध्वर्योः,

सुधा

तथा चास्वादजीवातुः पदसन्दर्भः काव्यम्। अथवा योजनायामेव तद्व्यापारेण 'इष्टार्थावच्छिन्नतादृशयोजनाविषयशब्दावल्येव वा काव्यम्'। "शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली" [ का० द० १।१० ] इति दण्ड्युक्तेः। न चोभयपदार्थप्रधानकद्वन्द्वविरोध इति वाच्यम्, काव्यस्य व्यङ्ग्यपरामर्षण[र्श]मृते चमत्कृत्यभावेन चित्तवशेऽहेतुत्वादुपदेशे पर्यवसानानुपपत्त्या व्यञ्जनाधीनव्यङ्ग्यपरामर्शावश्यकत्वात्। व्यञ्जनायाः शब्दार्थावाश्रयावित्येतावन्मात्रेण द्वयोः प्राधान्यमङ्गीकृत्य तत्करणादिति रसगङ्गाधरानुयायिनः, तदपि न; काव्यत्वप्रयोजकस्यास्वादव्यञ्जकत्वस्य शब्दार्थयोरविशेषात्। अर्थेष्वपि व्यञ्जनावृत्त्यङ्गीकारात्। शब्दार्थयोरुत्कर्षापकर्षाभ्यां तदुत्कर्षापकर्षव्यवहारात्। विभावाद्यर्थविशिष्टेषु तेषु वा तत्त्वे विनिगमकाभावाच्च। न च समाख्यैव विनिगमकम्, कविप्रकाश्यत्वेनैतदुपपत्तेः। इदं काव्यममुकेन कृतमिति व्यवहारोऽपि तत्पर एव, अन्यथा तन्नित्यत्वे मौनिश्लोकादौ च तदसम्भवात्। विभावत्वादिव्यवहारस्य शब्दार्थयोजनरूपकविव्यापारावलम्बकत्वाच्च।

रसगङ्गाधरकृतस्तु[1]—शब्दार्थयोः काव्यशब्दवाच्यत्वे प्रमाणाभावः। काव्यमुच्चैः पठ्यते, काव्यादर्थोऽवगम्यते इत्यादिसर्वप्रसिद्धव्यवहार[ तः ] शब्दविशेष[ स्य ] काव्यत्वप्रतिपत्तेः। व्यवहारस्य शब्दमात्रे लक्षणयोपपादनीयतापि न; काव्यत्वेनाभिमतशब्दार्थयुगले तच्छक्तिप्रमापकदृढतरप्रमाणस्यासत्त्वात्, विमतवाक्ये श्रद्धाया अभावाच्च। एवञ्च काव्यस्योभयत्र शक्तिग्राहकप्रमाणाभावे व्यवहाराच्छब्दवृत्तितच्छक्तेर्दुर्निवार्यत्वाच्च। तथा च विनिगमकाभावकथनमप्यसहेत् [ द्धेतुः ]। तथा च शब्दस्यैव तत्त्वे तल्लक्षणकथनमेव योग्यम्, न तु स्वकल्पितकाव्यपदार्थस्य।

[ यत्तु ] आस्वादोद्बोधकत्वस्यैव तत्प्रयोजकत्वेन तस्य चोभयत्र सत्त्वाद्युगलमेव तदिति [ आहुः ]। तन्न। रागस्यापि रसव्यञ्जकतया सर्वसम्मतत्वेन काव्य-

---

सामवेदप्रतिपादितेषूद्गातुः कर्तृत्वेनाङ्गत्वं बोध्यत इति। अत्र सर्वत्र "प्राणभृज्जाति०" [ ५।१।१२९ ] इति कर्मार्थेऽञ् प्रत्यय.।

वैदिकी यथा—होतुश्चमसभक्षणाङ्गत्वम् "होतृचमसः" इति वैदिक्या समाख्यया। यद्यपि चमसशब्दः पलाशादिकाष्ठनिर्मितस्य यज्ञियपात्रविशेषस्य वाचकः, तथाप्यत्र 'तात्स्थ्यात्ताच्छब्द्यम्' इति न्यायेन चमसस्थसोमपरः।

१—रस० आ० १, पृ० १०-२३.

## सुधा

त्वापत्तेः। एतेन रसोद्बोधसमर्थस्यैवात्र तत्त्वमित्यपास्तम्। सर्वनाद्य[व्या]ङ्गेषु तदापत्तेः। किञ्च काव्यत्वमुभयत्र व्यासज्यवृत्ति, प्रत्येकपर्याप्तं वा। नाद्यः, एको नु [न] दा [द्वा] वितिवत् श्लोकवाक्यं न काव्यमिति व्यवहारापत्तेः। नान्त्यः, एकस्मिन् पद्ये काव्यद्वयव्यवहारापत्तेः। तस्मात्तस्य शब्दनिष्ठत्वमेव। लक्षणे गुणालङ्कारादिनिवेशोऽपि न सन्, 'उदयमितश्चन्द्रः', 'गतोऽस्तमर्कः' इत्यादावव्याप्तेः। चमत्कारस्य तज्जीवितस्यात्र सत्त्वेन तदभावस्य वक्तुमयोग्यत्वात्। अन्यथा तवाभिमतस्यापि तत्त्वापत्तेः, तयोस्तत्राननुगमाच्च। वृक्षः कपिसंयोगीतिवत् काव्यत्वस्याव्याप्यवृत्तिताया अभावात् मूले महीरुहो विहङ्गमसंयोगी न शाखायामिति प्रतीतेरिवेदं पूर्वार्द्धे काव्य नोत्तरार्द्धे इति प्रतीतेरप्रसिद्धत्वात्, आत्मधर्माणां गुणानामुपस्कारकाणामलङ्काराणा[ं च] शरीरघटकत्वानुपपत्तेश्च। तस्माद् 'रमणीयार्थप्रतिपादकः शब्दः काव्यम्'। लोकोत्तराह्लादजनकज्ञानगोचरत्वं रमणीयत्वम्। लोकोत्तरत्वञ्च—आह्लादगतश्चमत्कारत्वापरपर्यायोऽनुभवसाक्षिको जातिविशेष एव। पुत्रस्ते जातः, धन ते दास्यामीति वाक्यार्थधीजन्याह्लादस्य लोकोत्तरत्वाभावान्न काव्यत्वातिप्रसक्तिः। इत्थञ्च [1]'चमत्कारजनकभावनाविषयार्थप्रतिपादकशब्दत्वम्, [2]यत्प्रतिपादितार्थविषयकभावनात्वं चमत्कारजनकतावच्छेदकं तत्त्वम्; [3]स्वविशिष्टजनकतावच्छेदकार्थप्रति

---

१. चमत्कारस्य=लोकोत्तराह्लादस्य जनिका या भावना=काव्यार्थविषयकं पुनःपुनरनुसन्धानम्, तस्या विषयो योऽर्थः, तस्य प्रतिपादकत्वे सति शब्दत्वं काव्यत्वमिति तात्पर्यम्।

२. यत्र कस्यचित् पुंसः काव्यवाक्यार्थविषयिका निरन्तरोत्पद्यमानतया धारावाहिनी स्मृतिविशेषरूपा भावना जायेत, तत्र चमत्कारजनकभावनाविषयीभूतानां सर्वेषामेव समानाकाराणां तेषां वाक्यार्थानां प्रतिपादकत्वात् सरूपे तादृशवाक्यकदम्बके काव्यलक्षणातिव्याप्तिः। तत्र हि तादृशां चमत्कारानाधायकत्वात् काव्यत्वं न कस्यापीष्टमित्यरुचेराह—यत्प्रतिपादितार्थेत्यादि।

येन यादृशानुपूर्वीमता शब्देन प्रतिपादिते बोधितेऽर्थे निष्ठा वृत्तिमती या विषयता, तन्निरूपिता या भावनानिष्ठा विषयिता, तदवच्छेदकं भावनात्वम्, चमत्कारनिष्ठजन्यतानिरूपितभावनानिष्ठजनकताया विषयतासम्बन्धेनावच्छेदकम्, तादृशानुपूर्वीमत्त्व काव्यत्वमिति लक्षणसमन्वयः।

एवञ्च प्रकृतवाक्यसमूहरूपशब्दस्य चमत्कारजनकत्वविरहात् तादृशानुपूर्वीमत्त्वाभावान्नातिव्याप्तिः।

३. यदादिपदप्रतिपाद्यार्थानां प्रकारतया शाब्दबोधे विषयीभावाद् वृत्तिज्ञानाधीन-

## सुधा

पादकतासंसर्गेण चमत्कारवत्त्वमेव वा काव्यत्वमिति फलितमित्याहुः। तदपि न। द्वयोरेव काव्यत्वस्येष्टत्वात्, कविव्यापारस्य तत्र समत्वात्। [1]तत्त्वञ्च चमत्कारत्वावच्छिन्नाह्लादजनकज्ञानगोचरत्वमेव। मृगो धावतीत्यादौ तादृशव्यापाराभावान्न काव्यत्वम्। तस्य शब्दमात्रवृत्तित्वनियमे तु कविवक्तृप्रौढोक्तितन्निबद्धवक्तृप्रौढोक्तिरूपार्थशक्तिस्या[मूलत्वा]देर्विलयापत्तेः। काव्य श्रुतमित्यादेः शब्दशक्तिसाधकव्यवहारस्येव काव्यं बुद्धमिति व्यवहारस्यार्थे काव्यत्वप्रतिपादकत्वात्। एतस्यैव शब्दशक्तौ तन्नियमस्य प्रतिषेधकत्वात्। अलङ्कारादिविशिष्टस्य वर्णनाविशेषस्य वा तस्य व्यासज्यवृत्तित्वासम्भवात्। पर्याप्ते तु इष्टापत्तिरेव। न च काव्यद्वयव्यहारापत्तिः, विजातीयैकचमत्कृतिजनकतया तद्व्यवहाराभावात्। [2]शब्दस्य चमत्कृतिजनकत्वे तस्य, अर्थचमत्कृतौ अर्थस्य, उभयत्र चमत्कृतौ द्वयोरेव काव्यत्वव्यवहारात्। [3]शक्या-(ब्दा)नन्त्यन्तु विजातीयैकचमत्कृतिजनकतया न दोषाय। किञ्च, शब्दार्थयोरौत्पत्तिक[4]नित्यसम्बन्धत्वात्तदन्वयव्यतिरेकानुविधानाद् द्वयोरेव तत्त्वमुचितम्। जन्य

---

तत्तदुपस्थितीनां कारणत्वेनापेक्षणाद् गौरवम्, यत्तच्छब्दयोरव्यवस्थितार्थकतयाऽननुगमश्चेत्यरुचेराह—स्वविशिष्टेत्यादि।

स्वशब्देनात्र चमत्कारत्वस्य ग्रहणम्। तथा च स्वविशिष्टा चमत्कारत्वावच्छिन्नजन्यतानिरूपिता या भावनानिष्ठा जनकता; भावनायामर्थस्य विषयतासम्बन्धेन विशेषणात्, तदवच्छेदको योऽर्थः, तत्प्रतिपादकत्वं सम्बन्धः, तेन सम्बन्धेन चमत्कारत्वविशिष्टत्वे सति शब्दत्वं काव्यत्वमिति सिद्धम्।

१. चमत्कारत्वावच्छिन्ना याऽऽह्लादनिष्ठा जन्यता, तन्निरूपिता या जनकता, तादृशजनकतावज्ज्ञानविषयत्वमेव कविव्यापारवत्त्वमिति भावः।

२. शब्दनिमित्तकचमत्कृतौ शब्दस्य, अर्थनिमित्तकचमत्कृतौ अर्थस्य, शब्दोभयनिमित्तकचमत्कृतौ उभयोश्च काव्यत्वं सर्वैरिष्टमेवेति पंक्तेराशयः।

३. शक्यानन्त्यमित्यत्र कोष्ठान्तर्गतपाठः केनचिदूहितो मूलपुस्तके, स सम्पादकाय न रोचते, यतः शब्दानन्त्यं दूषकताबीजं नास्ति, अपि तु शक्यानन्त्यम्। तस्य तु शक्यानन्त्यप्रयुक्तमिति शक्यानन्त्यमित्येव पाठः साधुः।

४. अयम्भावः—शब्दार्थयोः सम्बन्धस्य नित्यत्वेनोभयाश्रितत्वेन च शब्दसत्त्वेऽर्थसत्त्वस्यावश्यभावित्वेन काव्यत्वस्योभयत्र स्वीकारस्यैवौचित्यात्। शब्दार्थसम्बन्धस्य नित्यत्वन्तु जैमिनिना व्यवस्थापितम्। तथा हि "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाण बादरायणस्यानपेक्षत्वात्" [ जै० सू० १।१–५ ] इति सूत्रम्।

सुधा

जनकभावस्तु न सम्भवति, 'वागर्थाविव' इत्यादावनुगामित्वानापत्तेः। नाप्यभेदः, मुखदाहाद्यापत्तेः। कल्पितत्वे सम्बन्धाना नियमाभाव एव, सर्वेषां कल्पितत्वेन समानत्वात्। भेदाभेदस्य तु न सम्बन्धत्वम्, समवायस्तु गुणगुणिनोरेव। तस्मात्तयोः सम्बन्धस्य नित्यतया स्वाभाविकत्वेन पृथगेकस्यानुपस्थितिरेवेति कथं शब्दस्य तत्त्वमिति। तयोः सत्त्वे[व्ये]तरविषाणवत् समानकालीन[लिक]त्वप्रतिपत्तेरिति दिक्।

त्रिविधेऽपि काव्ये प्रथमभेदस्य ध्वनेर्लक्षणमाह—यत्रेति। यत्र काव्ये व्यङ्ग्यं व्यञ्जनाप्रतिपाद्यं वस्तु वाच्यातिशायि; वाच्यमित्युपलक्षणम्, वाच्यलक्ष्याव-

---

अस्यार्थः—उत्पत्तिशब्देनात्र जननानन्तरभाविनी स्थितिर्लक्ष्यते। औत्पत्तिकः सदा स्थितः, नित्य इति भावः। शब्दस्यार्थेन सम्बन्धः संज्ञासंज्ञिलक्षणः [ जै० सू० १।१।५ शाबरभाष्यम् ] ज्ञाप्यज्ञापकभावरूपः। अर्थो ह्याकृतिरूपो नित्य एव।

शब्दोऽपि नित्य एव। नित्ययोस्तयोः शब्दार्थयोः सम्बन्धोपि स्वभावसिद्धो नित्य इत्युक्तं भवति। तस्य सम्बन्धस्य, ज्ञानं ज्ञापकं प्रतिपत्तिहेतुः। उपदेशो गामानयेत्यादिरनादिवृद्धव्यवहार इत्यर्थः। इत्थं सम्बन्धस्यानादितां प्रतिज्ञाय तदुपपादयितुमाह—अव्यतिरेकश्चेति। अतीतेषु कालेषु कदापि यस्मात्तस्य व्यवहारस्याभावो नास्ति तस्मादनादिशब्दार्थसम्बन्ध इति तात्पर्यम्। अर्थेऽनुपलब्ध इति शब्दप्रतिपाद्यस्य वाक्यार्थस्यानिर्ज्ञातपूर्वत्वमाचष्टे। तत्प्रमाणं प्रकृतं चोदनात्मकं वेदवचनं धर्माधर्मप्रमितिकरणम्। अनेनानधिगतकालत्रयाबाधितार्थविषयकप्रमाजनकं वेदवाक्यं प्रमाणमेवेत्युक्तम्। इदं चानधिगतेत्यादिलक्षणलक्षितं प्रामाण्यं वैदिकलौकिकोभयसाधारणम्।

वेदे विशेषमाह—अनपेक्षत्वादिति। वेदो हि नित्योऽपौरुषेयत्वात्, प्रत्यक्षादिप्रमाणान्तरप्रभववक्तृपुरुषज्ञाननिरपेक्ष एव स्वार्थे प्रवर्तते। तस्मान्न वेदेऽप्रामाण्यशङ्का। लौकिकानां पुरुषवचसां प्रयोक्तृपुरुषज्ञानमूलतया स्वप्रामाण्याय तत्प्रामाण्यमुखनिरीक्षकाणां प्रामाण्यमनियतं भवेत्। नैषा कथा वेदे, तस्य पुरुषबुद्ध्यनपेक्षत्वात्।

बादरायणस्येति वचनं पूजार्थम्। यथोदितं प्रामाण्यसामान्यलक्षणं वेदप्रामाण्यगतमनपेक्षत्वलक्षणं वैशिष्ट्यं चाचार्यबादरायणस्यापि सम्मतमेवेत्याशयः।

शक्यबोधकत्वे सति शक्येतरबोधकत्वमुपलक्षणत्वम्।

## यत्र वाच्यातिशायि व्यङ्ग्यं स ध्वनिः ।

**यथा—**

'स्थिताः क्षणं पक्ष्मसु ताडिताधराः पयोधरोत्सेधनिपातचूर्णिताः ।
वलीषु तस्याः स्खलिताः प्रपेदिरे चिरेण नाभिं प्रथमोदबिन्दवः ॥'

**सुधा**

[ श्ये अ] तिशेतेऽतिक्रामति एवंरूपं भवेत् स ध्वनिः । सर्वनाम्ना विशेष्यगतलिङ्ग-सङ्ख्योपादानात् पुंस्त्वम् । वाच्यलक्ष्यवृत्तिचमत्कृतिगौणत्वाधायकचमत्कृत्यधिकरण-व्यङ्ग्याश्रयत्वं तत्त्वमिति यावत् । अगूढस्फुटव्यङ्ग्ययोरतिव्याप्तिवारणाय चमत्कृती-त्याद्यन्तम् । अपरवाच्यसिद्ध्यङ्गमध्यमेऽतिव्याप्तिवारणाय—वाच्येत्यादि ।

नव्यास्तु, शब्दार्थौ गुणीभावितात्मानौ काव्यर्थमभिव्यक्त ·[ इक्त ]··· स्तदाद्यम् । एतस्यैव ध्वनिव्यवहार इत्याहुः ।

अत्रायं विशेषः—शाब्दिकमते स्फोटव्यञ्जकशब्दमात्रस्य ध्वनित्वम् । आल-ङ्कारिकमते तिरस्कृतवाच्यव्यङ्ग्यबोधकशब्दार्थयोस्तत्त्वमिति ।

एतस्य ध्वनेरुदाहरणमाह—**यथेति** । **स्थिता इति** । कुमारकाव्ये पार्वतीतपोवर्ण-नम् । उदकस्य बिन्दवः । 'बिन्दुपृषताः पुमांसो विप्रुषः स्त्रियः' [अम० १,१० ६] इत्यमरः । 'मन्थौदन··'[ पा० सू० ६।३।६० ] इत्यादिनोदकस्योदादेशः । प्रथमे उदबिन्दवः । प्रथमपदकथनेन तेषां विरलता, बहुवचनेन स्वकार्यसामर्थ्यञ्च ध्वन्यते । तथा च चिरपद[ स्य ][१] नाभिप्राप्तेश्च निर्वाहः । तस्या देव्याः पक्ष्मसु नेत्ररोमसु 'पक्ष्म सूत्रादि सूक्ष्मांशे किञ्जल्के नेत्ररोमसु' इति शाश्वतः । क्षणं मसृण-तया स्थिताः सान्द्रत्वेनेति भावः । अनन्तरं ताडितो विद्धोऽधरो यैस्तथोक्ताः । ताडनोक्त्याऽधरस्य कोमलता ध्वन्यते । पयोधरयोस्तनयोरुत्सेधे उपरि निपातेन चूर्णिता विशकलिताः काठिन्यादिति भावः । अथ वलीषु स्खलिता निम्नोन्नतत्वादिति भावः । इत्थं चिरेण न तु शीघ्रं प्रतिबन्धकाधिक्यात् , नाभिं प्र(ति)पेदिरे प्रविष्टा न तु ततो जग्मुः । तेन नाभेर्गाम्भीर्यम् । अत्र परिकरालङ्कारः, "विशेषणैर्यत् साकूतैरुक्तिः परिकरस्तु सः" [ का० प्र० उ० १०,सू०१८३ ] इति प्रकाशोक्तेः । वंशस्थ वृत्तम्—"जतौ तु वंशस्थमुदीरित जरौ" [ वृत्त० अ० ३,श्लो९४७ ]इति तल्लक्षणात् ।

---

१. **चिरपदप्रतिपाद्यस्येत्यर्थः । अथवा 'चिरपदनस्य' इति पाठः कल्पनीयः । तत्र पदनमिति 'पद गतौ' इत्यस्मान्निष्पन्नमित्यर्थः ।**

**अत्र तपस्यन्त्या देव्या देहोपरि निपततां प्रथमवृष्टिबिन्दूनां क्रियास्वभाववर्णनेन देव्याः समाध्युचितावस्थानाभिव्यक्तिद्वारा चिरनिदाघतप्तदेहोपरि निपतनेन सुखपारवश्यसम्भ्रमहेतौ प्रथमवृष्टावप्यविहता समाध्यवस्था व्यज्यते ।**

**तथा हि—**

'नासाग्रन्यस्तनयनः संवृतास्यः सुनिश्चलः ।
ध्यायीत मनसा देवमुरो विष्टभ्य चाग्रतः ॥'

**इति समाधिमतामवस्थानमाहुः । तत्र पक्ष्मसु स्थिता इत्यनेन नासाग्रन्यस्तनयनतारूपमर्धनिमीलनं व्यज्यते, सर्वथोन्मीलने पक्ष्मणामूर्ध्वाग्रत्वेन सर्वथा निमीलने तेषामधोग्रत्वेन च तेषु जलबिन्दूनां स्थित्यसंभवात् । पक्ष्मभ्यश्च्युतानां तेषामास्याप्रवेशेनाधरोष्ठे निपत्य ततश्च्युतिकथनेन संवृतास्यत्वं व्यज्यते, ततश्च्युतानां तेषां स्तनोत्सेधनिपतनादिवर्णनेन तूरोविष्टम्भः, अलसवदवनतावस्थाने हि स्तनयो-**

**सुधा**

व्यङ्ग्यव्यञ्जनमवतारयति—**अत्रेति** । तपस्यन्त्या देव्याः प्रथमवृष्टिबिन्दूनां क्रियास्वभाववर्णनेन समाध्यवस्था व्यज्यत इत्यन्वयः । तपःशब्दात् [ क्य ] जन्ताच्छतरि कृते "उगितश्च" [ पा० सू० ४।१।६ ] इति ङीपि, "आच्छीनद्योः" [ पा० सू० ७।१।८० ] इति नुम् । प्रथमे वृष्टिबिन्दवः "विशेषणं विशेष्येण" [ पा० सू० २।१।५७ ] इति समासः । अन्यत्र तत्क्रियास्वभाववर्णनं निषेधयति—**देव्या देहोपरि निपततामिति** । देवीपदेन शोभावत्त्वम्, समाधिश्चित्तैकाग्रीकरणम्, तत्रोचितं योग्यं यदवस्थान स्थितिः, तस्याभिव्यक्तिः प्रकटता तद्द्वारेत्यर्थः । निदाघेन ग्रीष्मेण ततो[ प्तो ] देहस्तत्र यन्निपतनम्, तेन सुखपारवश्यरूपसम्भ्रमकारणप्रथमवृष्टावपि अविहता, अतिरस्कृतेति यावत् । विशेषोक्तिरलङ्कारः ।

"विशेषोक्तिरखण्डेषु कारणेषु फलावचः" [ का० प्र० उ० १०,सू० १६३ ] इत्युक्तेः । प्रत्येकपदव्यङ्ग्यमवतारयति—**तथा हीत्यारभ्यासम्भवादित्यन्तेन । नासाग्रेति** । अग्रत उरो विष्टभ्य स्तम्भयित्वा । शेषं स्पष्टम् । समाधिमतां योगिना योगावस्थितिमाहुः । पार्वत्यास्तद्याथात्म्यवर्णनेन स्वभावोक्तिरपि; "स्वभावोक्तिस्तु डिम्भादेर्जात्यादिस्थस्य वर्णनम्" [ का० प्र० उ० १०सू० १६८ ] इत्युक्तेः । एतदेव प्रतिपदं प्रतिपादयति—**तत्रेति** । पक्ष्मस्थितिकथनेनेति यावत् । व्यज्यते-व्यञ्जनया प्रतिपाद्यते । तत्र हेतुमाह—[ **सर्वथेत्यादि** ] तेषां पक्ष्मणाम्, तेषु नेत्ररोमसु । ताडितेत्यादिगम्यव्यङ्ग्यमवतारयति—**पक्ष्मभ्य इत्यादिना** । पतितानां

रन्तःसंकुचिताकारतया तदुत्सेधयोस्तेषां पतनं न स्यात्। कथञ्चित्तयोः पतित्वा वलित्रयं प्राप्तानामपि वलीषु तिर्यगेव गमनं स्यात्, न नाभिदेशप्राप्तिः। नाभौ च संवृतायां प्रवेशो न स्यात्। पक्ष्माधरादिपतनक्रमकथनेन च निश्चलत्वं व्यज्यते। मुखादिचलने सति पक्ष्मपतितानां तेषामधरपयोधरादिक्रमेण पतनासंभवात्।

किं चैभिरेव विशेषणैर्द्रव्या लोकोत्तरं सौन्दर्यमभिव्यज्यते; स्थिता इत्यनेन पक्ष्मणामविरलतायाः, क्षणमित्यनेन तेषां मसृणतायाः, पक्ष्मपतनशिथिलवेगैरुदबिन्दुभिस्ताडनोक्त्या अधरस्यातिसौकुमार्यस्य; पक्ष्माधरपतनादिभिः शिथिलवेगानां तेषां स्तनोत्सेधे चूर्णीभाववर्णनेन तयोरतिकाठिन्यस्य; उरोविष्टम्भेऽपि वलीषु तेषां स्खलनोक्त्या वलीनां विस्पष्टतायाः; सर्वबिन्दूनां नाभावेव प्रवेशकथनेन नाभेरतिगभीरतायाश्चाभिव्यञ्जनात्।

एवं च वाच्यातिशायि व्यङ्ग्यमत्रेति ध्वनेरुदाहरणमिदम्।

### सुधा

मुखे प्रवेशाभावकथनेन ततोऽधरोष्ठात् पतनकथनेन पयोधरेत्यादिव्यङ्ग्यमवतारयति। ततोऽधरोष्ठात् पतितानां बिन्दूनाम्। आदिना चूर्णीभाववर्णनमुरो विष्टम्भपदेन कथ्यते।

इतरपदव्यङ्ग्यमाह—तयोरिति। ताभ्यामित्यर्थः। आदिपदमितरावयवपरम्। निश्चलत्वाभावे तादृशक्रमेण पतन न स्यादिति दिक्।

चमत्कारार्थं गूढव्यङ्ग्यमवतारयति—किञ्चेति। पूर्वोक्तैरेवेत्यर्थः। अङ्गानामिति शेषः। अलौकिकचमत्कृतिमत् [त्वं]व्यज्यते प्रत्येकपदव्यञ्जनया प्रतिपाद्यते। तदाह—स्थिता इत्यादि। अत्र पष्ठयन्तेषु अभिव्यञ्जनादित्यस्य प्रत्येकमन्वयः। स्थिते[ता इ]ति पदं नेत्ररोम्णा सघनताम्, क्षणपदं स्निग्धताम्; तत्पतनशिथिलवेगजलबिन्दुताडनमधरातिसुकुमारताम्; द्वाभ्यां पतनेनातिशिथिलानां तेषां स्तनयोः उपरि पतनेन चूर्णता तदतिकाठिन्यम्; उरोविष्टम्भेऽपि वलिभ्यः[1] स्खलन वलीविस्पष्टताम्; सर्वबिन्दूना नाभौ प्रवेशोक्तिस्तदतिगम्भीरताम्; व्यनक्तीति निष्कर्षोन्वयः।

व्याख्यानमुपसहरति—एवमिति। वाच्यार्थादतिशय आधिक्यमस्ति यत्र तद्व्यङ्ग्यम। अत्र तद्ध्वनेरिदमुदाहरणं कथितमिति शेषः।

---

१. वलीः प्राप्य स्खलनपदमित्यर्थः। अत्र प्रकरणे सर्वत्र व्यञ्जकैः स्नाकमुक्तिपदं पदपदं प्रयोक्तव्यम्।

**यथा वा—**

'निश्शेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ॥

**अत्र वापीं स्नातुं गतासि, न तु तत्सकाशमिति वाक्यार्थे स्थिते तत्सकाशमेव रन्तुं गतासीत्यधमपदेन प्राधान्येन व्यज्यते । तथा हि—**

**सुधा**

एवं कालिदासीयोदाहरणं व्याख्याय प्रकाशोक्तध्वनेरुदाहरणमाह—**यथा वेति** । उदाहरणान्तरमित्यर्थः ।

नायकानयनाय प्रेषिता तमुपभुज्यागतां दूतीं प्रति विदग्धोत्तमा । नायिका स्नानकार्यत्व [ त्व ? ] प्रतिपादनमुखेन सम्भोगचिह्नान्युद्घाटयितुमाह—( हीति पद यद्यपीत्यर्थे ) **निश्शेषेति** । अयि मिथ्यावादिनि ! बान्धवजनस्याज्ञातपीडागमे ! दूति ! इतो वापीं स्नातुं गतासि । पुनरेवार्थे । तस्याधमस्यान्तिकं नैवेत्यन्वयः । यतस्तव स्तनतटं निश्शेषच्युतचन्दनम्, तवाधरो निर्मृष्टरागः, तव नेत्रे दूरमनञ्जने, तवेयं तन्वी तनुः पुलकितेत्यन्वयः । मिथ्यावादिनि ! मया गत्वाऽनेकधा प्रसादितोऽपि नागत इति मिथ्याभाषणशीले ! बान्धवजनस्य मद्रूपस्याज्ञातः स्वार्थपरायणतया नाकलितः पीडागमो यया तथाभूते दूति न तु सखि ! तेन मिथ्याभाषणयोग्यता व्यज्यते । इतो मत्सन्निधेर्वापीं प्रति स्नानाय गतासि, तत्कालानतिक्रमलोभात् । तस्य बहुधा कृतापराधस्य, अत एवाधमस्य परवेदनानभिज्ञतया दुःखप्रयोजककर्मशीलस्यान्तिकं नैव गतासीत्यन्वयः ।

उक्तार्थे साधकमाह—**निश्शेषेति** । तवेत्यस्य सर्वत्रान्वयः । यतस्तव स्तनतटं निश्शेषच्युतचन्दनम्, स्तनयोस्तटः प्रान्तसमदेशः । निश्शेषं च्युतं चन्दनं यस्मात्तत् तथाभूत न तु स्तनसन्ध्यादि । एवमधरो निश्शेषो [ षं ] मृष्टो रागो यस्य न तूत्तरोष्ठः, व्यञ्ज[ न्युब्ज ]तया तत्र जलसम्बन्धाभावात् । नेत्रे उपरि भाग एवाञ्जनरहिते स्नाने मुद्रणात् । तत्र तन्वी तनुः पुलकिता पुलकाः सञ्जाता अस्यास्तथाभूतेत्यर्थः ।

अत्र व्यङ्ग्यमवतारयति—**अत्रेति** । वापीस्नानाय गतासि न तत्समीपमित्यर्थे वाच्ये सति तत्समीपमेव रन्तु गतासीति व्यङ्ग्योऽर्थोऽधमपदेन मुख्यतया व्यज्यते । तन्मुख्यत्वमेव प्रतिपादयति—**तथा हीत्यादि** । जातिकर्मान्यतरप्रतिपादितापकर्षवत्त्वमधमत्वम् । तदेवाह—जात्या कर्मणा वापकर्षो द्विधा । उत्तमनायिका नायकस्य

**अधमत्वमपकृष्टत्वम्, तच्च जात्या कर्मणा वा भवति। तत्र जात्याऽपकर्षं नोत्तमनायिका नायकस्य वदति, नापि स्वापराधपर्यवसायिदूतीसंभोगादिहीनकर्मातिरिक्तेन कर्मणा, तादृशं च दूतीसंभोगात्प्राचीनं सर्वं सोढमेवेति नोद्घाटनार्हम्; अन्यथा स्वयं दूतीसंप्रेषणानुपपत्तेः। तदनन्तरं च स्वप्रेषितदूतीसंभोगरूपमेव स्वयं संनिहितचिह्नैर्ज्ञातुं शक्यं हीनकर्म संभवतीति तत्पर्यवसायिनाऽधमपदेन तस्यान्तिकमेव रन्तुं गतासीति व्यज्यते। 'निःशेषच्युतचन्दनं स्तनतटम्' इत्यादीनि वाच्यानि संभोगचिह्नोद्घाटनेन तत्र साहायकमाचरन्ति। कथम्? 'निःशेषच्युतचन्दनं स्तनतटम्' इत्यत्र तावद्वापीं स्नातुमितो गतासीति वाच्यार्थमुपपादयितुमिहोत्तरीयकर्षणेन चन्दनच्युतिरित्यन्यथासिद्धिपरिहाराय 'निःशेष' विशेषणं कृतम्। ततश्चन्दनच्युतेः स्नानसाधारण्यव्यावर्तनेन संभोगचिह्नोद्घाटनाय तटग्रहणम्। स्नाने हि सर्वत्र चन्दनच्युतिः स्यात्, तव तु स्तनयोस्तटे=उपरिभाग एव दृश्यते, इयमाश्लेषकृतैवेति। तथा 'निर्मृष्टरागोऽधरः' इत्यत्र ताम्बूलग्रहण-**

## सुधा

जात्यापकर्ष त [न] वद[द]ति।। स्वपद नायिकापरम्। नायिकापराधे पर्यवसायो यस्यास्ति, यत् [तत्] दूतीसंभोगादिहीनकर्मणोऽतिरिक्त कर्म, तेनाप्यपकर्षो न सम्भवति। तस्य पूर्वमेव ज्ञातस्य कथनानर्हत्वात्। अन्यथा सहनाभावे। दूतीप्रेषणाभावापत्तेः। दूतीसम्भोगरूपकर्मणा इष्टापत्तिमङ्गीकरोति। सन्निहितानि निश्शेषच्युतचन्दनस्तनतटादीनि चिह्नानि, तैरात्मना प्रेषितदूतीसम्भोगरूपं हीन कर्म ज्ञातुं शक्यम्, तन्निश्चयपरेणाधमपदेन नायकनिकटमेव क्रीडितुं गतासीति व्यञ्जनया वक्तृबोद्धव्ययोर्वैशिष्ट्यबलात् प्रतिपाद्यत इत्यर्थः।

अधमपदस्यैव व्यङ्ग्यव्यञ्जकतया सार्थकत्वेनेतरेषां पदानां वैयर्थ्यमाशङ्क्य तत्साहाय्यकथनेन तेषां सार्थकतां प्रतिपादयितुं ग्रन्थमवतारयति—**निश्शेषेत्यादि**। आदिपदेन निर्मृष्टराग इत्यादि गृह्यते। शेषवाक्यानि संभोगलक्ष्मकथनेनाधमपदे साहाय्यं प्रतिपादयन्ति। तदाह—**कथमिति**। चन्दनच्यवनस्योत्तरीयाकर्षणेन सिद्धौ निश्शेषविशेषणं वापीस्नानप्रतिपादनार्थम्। तेन वाच्यार्थोपपादनं कृतम्। तस्याः स्नानसाधारण्यनिवृत्त्यर्थं सम्भोगलक्ष्मप्रकटनाय तटपदम्। स्नानेन सर्वत्र चन्दनच्यवने यत्तत्स्तनप्रान्त एव, इदम् आश्लेषपदं करस्पर्शपरम्, तत्कृतमेवेत्यर्थः। तत्रैव मर्दनाधिक्यादिति यावत्। मृष्टरागोऽधर इत्युक्ते तस्य ताम्बूल

विलम्बात्प्राचीनरागस्य किंचिन्मृष्टतेत्यन्यथासिद्धिपरिहाराय 'निर्मृष्टरागः' इति रागस्य निःशेषमृष्टतोक्ता। पुनः स्नानसाधारण्यव्यावर्तनेन संभोगचिह्नोद्धाटनायाधर इति विशिष्य ग्रहणम्। उत्तरोष्ठे सरागेऽधरोष्ठमात्रस्य निर्मृष्टरागता चुम्बनकृतैवेति। 'नेत्रे दूरमनञ्जने' इत्यत्र प्रातर्दत्तमञ्जनं कालविलम्बेन किंचिद्विलुप्तमित्यन्यथासिद्धिपरिहाराय दूरमित्युक्तम्। दूरम् = अत्यर्थमित्यापाततोऽर्थः। कालतः स्नानेन वा सर्वतोऽञ्जनलोपः स्यात्, तव तु लोचनयोः क्वचित्प्रान्त एवानञ्जनत्वम्, इदं चुम्बनकृतमेवेति। 'पुलकिता तन्वी तवेयं तनुः' इत्यत्रापाततस्तन्वीति सहजतानवकीर्तनेन पुलकितेति स्नानचिह्नोपन्यासः। पुलकिताऽपि तन्वी वर्तत इति हृदि स्थितोऽन्वयः। तेन च स्नानेन पुलकिता तनुः किंचिदुच्छ्वसिता भवति, इयं तु न तथेति रतिक्लेशजनितावेव तौ नवपुलकोद्गमाविति मर्मोद्धाटनम्।

एवमेभिर्वाक्यैरुपस्कृतेनाधमपदेन तस्यान्तिकमेव रन्तुं गतासीति व्यज्यमाने प्राग्वाच्यार्थतादशायां वापीं स्नातुं गतासीत्येतदनुगुणार्थतयाऽन्वितं मिथ्यावादिनीति संबोधनमपि व्यङ्ग्यानुगुण एवार्थे

सुधा

ग्रहणविलम्बादपि सिद्धिः। अतो वाच्यार्थोपपत्तये निश्शेषार्थकनिरित्यस्योपादानम्। निश्शेषमृष्टरागतायाः स्नानसाधारण्य न। तत्संभोगव्यञ्जनार्थमधरपदोपादानम्। उत्तरोष्ठे सरागेऽधरोष्ठस्यैव विशेष्यत्वम्। तत्र चुम्बनाधिक्य व्यनक्ति।

प्रातर्दत्ताञ्जनस्य कालविलम्बेन किञ्चिल्लुप्तत्वे सिद्धे वापीस्नानप्रतिपादनाय दूरमित्युक्तम्। अतिविलुप्तमित्यर्थः। तस्यापि कालस्नानाभ्यां सिद्धौ क्वचित्प्रान्त एवानञ्जनता चुम्बनमेव व्यनक्ति। तनुस्तन्वीत्येतावदुक्तौ स्वाभाविकतानवप्रतीत्या वाक्यार्थमुपपादयितुं पुलकितेति। तस्यापि तत्त्वनिषेधाय 'वर्तते' इति हृदि स्थितोऽन्वयः। स्नानपुलकिततनोः किञ्चिदुच्छूनता, अत्र तदभावात्। तानवपुल्कोद्गमौ सम्भोगक्लेशजनितावेवेति व्यङ्ग्यव्यञ्जनम्। एतादृशैर्वाक्यैस्संस्कारवताऽधमपदेन तदन्तिकगमने व्यक्ते वापीस्नानगुणानुगुणतयाऽन्वित मिथ्यावादिनीति सम्बोधन पत्यन्तिकगमनव्यङ्ग्यानुगुण एवार्थे पर्यवसानं प्राप्नोति।

ततो हेतोः तिरस्कृतवाच्यमस्य व्यङ्ग्य वाच्यार्थादतिशययुक्तमिति हेतोरिदमपि उत्तमकाव्योदाहरणमस्तीति शेषः। अत्रान्यसम्भोगदुःखिता नायिका। शार्दूलविक्रीडितं वृत्तम्। "सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्" [ वृत्त० अ० ३,९८ ] इति वृत्तरत्नाकरोक्तेः।

पर्यवस्यति। ततश्च न्यग्भावितवाच्यमस्यापि व्यङ्ग्यं वाच्यातिशायीतीदमपि ध्वनेरुदाहरणम्।

सुधा

रसगङ्गाधरकृत्तु—'तटादिघटितवाक्यार्थानां स्नानव्यावृत्तिमुखेन सम्भोगाङ्गानामाश्लेषादीनां प्रतिपादनेन प्रधानव्यङ्ग्यव्यञ्जने साहाय्याचरणम्' इति। तदेतच्छास्त्रानवबोधनिबन्धनम्, प्राचीनसर्वग्रन्थविरोधादुपपत्तिविरोधाच्च। तथा हि—पञ्चमोल्लासशेषे[1] "निश्शेषेत्यादौ गमकतया यानि चन्दनच्यवनादीन्युपात्तानि, तानि कारणान्तरतोऽपि भवन्ति। यतश्चात्रैव स्नानकार्यत्वेनोपात्तानीति नोपभोग एव प्रतिबद्धानीत्यनैकान्तिकानि" इति प्रकाशकृतोक्तम्। तथा तत्रैव[2] "भम धम्मिअ वीसत्थ[3]...." [गाथासतशती] इत्यादौ लिङ्गजलिङ्गिज्ञानरूपेणानुमानेन व्यक्तिं गतार्थयतो व्यक्तिविवेककारस्य मतं प्रत्याचक्षाणेन व्यभिचारिणाऽसिद्धत्वेन च सन्दिह्यमानादपि लिङ्गाद् व्यञ्जनं प्रकाशकृताऽभ्युपगतम्[4]। [एवञ्च] व्यञ्जकानां साधारण्यं प्रतिपादयता प्रामाणिकग्रन्थेन तदसाधारण्यं प्रतिपादयतस्तव ग्रन्थस्य विरोधः स्यात्। किञ्च निश्शेषेत्याद्यवान्तरवाक्यार्थैः स्नानव्यावृत्तिद्वारा व्यङ्ग्यसाधारण्यसम्पादनं किमर्थम्? व्यङ्ग्यव्यञ्जनायेति चेन्न, असाधारणत्वस्य व्यञ्जनानुपायत्वात्, "'औण्णिद्दम्' इत्यादौ साधारणो[निद्रयाः]निःश्वासादीनां वक्त्रादिवैशिष्ट्यबलेनार्थविशेषव्यञ्जकत्वाङ्गीकारात्, व्याप्त्यपरपर्यायासाधारण्यस्यानुमानानुकूलतया व्यक्तिप्रतिकूलत्वाच्च।

---

१. का० प्र० उ० ४, पृ० २४६। २. का० प्र० उ० ५, पृ० २५३-२५५।

३. भम धम्मिअ! वीसत्थो सो सुणओ अज्ज मरिओ देण।
गोलाणइकच्छनिकुडंगवासिणा दरिअसींहेण॥"
भ्रम धार्मिक! विश्वस्तः स शुनकोऽद्य मारितस्तेन।
गोदानदीकच्छनिकुञ्जवासिना दृप्तसिंहेन॥ इतिसंस्कृतच्छाया।

४. एवञ्च प्रामाणिकप्राचीनग्रन्थेषु व्यभिचारिणाऽपि हेतुना व्यङ्ग्यस्य प्रतीतिः प्रतिपादिता। दीक्षितेन तु अत्र व्यञ्जकहेतूनामव्यभिचरितत्वसम्पत्तये महान् प्रयासः क्रियत इत्येतत् सर्वथा प्राचीनपथप्रतिकूलत्वादप्रामाणिकत्वेनोपेक्षणीयमेव स्यादिति निष्कर्षः।

५. औण्णिद्दं दोब्बल्लं चिंता अलसंतणं सणीससिअम्।
मह मंदभाइणीए कएं सहि तुह विपरिभवइ॥
औन्निद्र्यं दौर्बल्यं चिन्तालसत्वं सनिश्श्वसितम्।
मम मन्दभागिन्याः कृते सखि! त्वामपि परिभवति॥ इति संस्कृतच्छाया।

## सुधा

अथ तटादिघटितत्वेऽपि निश्शेषेत्यादिवाक्यार्थानामसाधारणत्वाभावः, सलिलार्द्रवसनप्रोच्छता[ ञ्छना ]दिना तत्सम्भवात्। तर्हि वापीस्नानव्यावर्तनेन कोऽर्थः। एकस्मिन्निवानेकत्राप्यनैकान्तिकताया अनुमितिविरोधित्वात्, व्यक्त्य-नुकूलत्वाच्च। किञ्चात्र तदन्तिकगमनं रमणफलञ्च व्यङ्ग्यशरीरम्।

तत्राद्यस्य व्यङ्ग्यत्व न सम्भवति, पूर्ववाक्यार्थानां वाच्यार्थे वापीस्नाने बाधितत्वा-द्विधिनिषेधप्रतिपादकाभ्याम् 'गता' 'न गता' इति शब्दाभ्यां विरोधिलक्षणया निषेधविध्योः प्रतीतेरुपपत्तेः। न हि लक्षणीयेऽर्थे व्यक्तिवेद्यतोचिता। न च [नु] तस्य तथात्वेऽपि रमणरमणांशस्य शब्द [लक्ष्य]शक्तिमूलध्वनित्वमव्याहतमिति चेन्न। अधमत्वमपकृष्टत्वम्, तच्च जात्या कर्मणा वेत्यादिसन्दर्भेणाधमत्वान्वयानुपपत्तिवेद्यता-प्रतिपादनात्, अन्यलक्ष्यस्य शब्दार्थत्वानङ्गीकाराच्च। किञ्च तथात्वेऽपि वाच्याना निश्शेषेत्यादि वाक्यार्थानामधमत्वस्य च त्वदुक्तरीत्या प्रकारान्तरेणानुपपद्यमानतया वाच्यसिद्ध्यङ्गत्वेन रमणरूपव्यङ्ग्यस्य गुणीभूतव्यङ्ग्यत्वप्रसङ्गात्। तस्माद् विदग्धना-यिकाप्रयुक्तनिश्शेषेत्यादिवाक्यार्थानां वाच्यार्थसाधारण्यमेवोचितम्। अधमत्वोक्तिरपि प्राचीनानामेवं [व]सोढानामप्य....[प] राधानामसत्यतया [ हयताम् ] दूतीं प्रति प्रतिपादयितुम्, न तु सम्भोगम्, विदग्धोत्तमनायिकायाः सखीसमक्षं तदुपभोगरूपस्य स्वनायकापराधस्य स्फुट प्रकाशयितुमतितमामनौचित्यादित्याहुः। तदभ्याशयानव-बोधात्, व्यङ्ग्यतदितर कोटिसाधारणस्य वाक्यार्थस्य व्यङ्ग्यकोटौ भूयः सहचारग्रहस्य व्यञ्जनोपयोगात्, प्रायशः सम्भावनासमशीलस्य व्यङ्ग्यबोधस्यापेक्षितोत्कटव्यङ्ग्य-त्वस्य वक्तृवैशिष्ट्यादिवशेनापेक्षितत्वात्। प्रकृते च तटादिमात्रे चन्दनच्यवनादिकं सम्भोगेन भूयः सहचरितमिति तेन तद्व्यञ्जनमिति तात्पर्यात्। सामान्यतश्चन्दन-च्यवनादिस्नानसाधारण तटादिघटितं न स्नानेन सहचरितं किन्तु सम्भोगेनेत्येव साधारण्यस्य व्यावृत्तिरभिप्रेता, न तु सर्वथा स्नानव्यावृत्तिः, सम्भोगैकान्तिकता वा, येन **प्रकाशमन**विरोधः। व्याख्यान एवकारोऽपि सम्भावनार्थकः प्राचुर्यबोधको [ वा ] बहुधा, देवदत्त एवायमित्यादिवत्। अस्तु वा स्नानव्यावृत्तिः, तावतापि न संभोगासा-धारण्यम्, आर्द्रवसनप्रोञ्छनादिनापि तादृशच्यवनादेः सम्भवात्, नानुमानगतार्थ-त्वम्, तथा सति वापीस्नानव्यावृत्त्या कोऽर्थः ? इति चेद्, व्यङ्ग्यबोध इति ब्रूमः। सम्भावितयोर्द्वयोरेकव्यावृत्तौ परोन्मेषहेतुताया अनुभवसिद्धत्वात्, वाच्यव्यङ्ग्योभय साधारणो हेतुरेकत्र बाधितोऽन्यत्र पर्यवस्यतीत्येव न्याय इति **सुबुद्धिनाथोक्तेश्च**।

यत्तु स्नानव्यावृत्तौ विरुद्धलक्षणया तदन्तिक गतासीत्यंशस्य व्यवहार[ङ्ग्य]-ताहानिरिति। तत्रोच्यते—यदि स्नानव्यावृत्तिर्वाक्यार्थदशायामेव तदैवं भवेत्।

सुधा

वाक्यार्थप्रतीत्यनन्तरन्तु प्रतीततया तया व्यङ्ग्योन्मेषे लक्षणानवकाशात्। नहि तटमेव तथाविधमिति प्राथमिकबोधः, तस्य 'व्यर्थं सत् किञ्चिज्ज्ञापयति' इति न्यायालोचनोत्तरभावित्वादिति तत्प्रयुक्तस्नानव्यावृत्तिबोधः। अस्तु वा तदंशे लक्षणा, रन्तुमिति फलस्यैव ध्वनित्वात्।

यत्तु रमणफलस्यापि ध्वनित्वाभावः, अधमत्वमपकृष्टत्वमित्यादिना तस्याप्यर्थापत्तिवेद्यत्वप्रतिपादनादित्युक्तम्। तदप्यसत्। न हि तेन ग्रन्थेन सम्भोगमृतेऽधमत्वस्यानुपपत्तिः। किन्तु 'नोत्तमनायिकावन्नो[..नो]द्घाटनार्हम्' इत्यादिना वक्तृवैशिष्ट्यप्रतिपादनेन व्यङ्ग्यपर्यवसानमात्रत्वात्। एतेन सम्भोगरूपव्यङ्ग्यस्य वाच्यसिद्ध्यङ्गत्वेन गुणीभूतव्यङ्ग्यत्वापत्तिरित्यपि निरस्तमिति सङ्क्षेपः।

तस्माद् विदग्धाया गूढोक्त्या साधारणेष्वेवेषु व्यङ्ग्येषु सम्भाव्यमानासाधारण्येषु विदग्धत्वदुश्शीलत्वरूपवक्तृबोद्धव्यवैशिष्ट्यबला[द्]दुःखप्रयोजककर्मशीलत्वरूपोऽधमपदार्थो वाच्यार्थो व्यञ्जनया दूतीसम्भोगरूपतादृशकर्मशीलत्वाकारेण पर्यवस्यति। एवं झटिति व्यङ्ग्यबोधकत्वादधमपदस्य प्राधान्यं चन्दनच्यवनादीनां स्नानकार्यतया निबद्धानां योग्यतया सम्भोगभूताश्लेषचुम्बनादिकार्यताप्रतिसन्धाने तद्व्यञ्जनद्वारा सम्भोगगमकत्वम्, न तु तदसाधारण्यप्रतिपादनम्। अत्र त्वय्यक्तज्ञाया यद्वान्धवबुद्ध्याविश्वासः, [यच्च] तत्रैवविधे दृणोऽनुरागस्तदुक्तमेव।

एवंविधविविधवेदनाजनितसन्तापपात्रत्वं ममेति ईर्ष्याहेतुकविप्रलम्भसञ्चारिनिर्वेदध्वनिः, दूतीसम्भोगस्य तत्रानुगुणत्वात्। वाच्यानां चन्दनच्यवनादीनां व्यङ्ग्यानाञ्च परिरम्भचुम्बनाद्यनुभावाना संभोगोत्कर्षद्वारेणेर्ष्योत्तेजकानां निर्वेदोत्कर्षकतेति दिक्[1]।

---

१. महामहोपाध्यायगङ्गाधरशास्त्रिणस्तु—"इदमत्र दीक्षिताकूतम्—वाच्यसिद्ध्यङ्ग (व्यङ्ग्य) रूपमध्यमकाव्यता तत्रैव, यत्र व्यङ्ग्यार्थोपस्कृतं वाच्यं चर्वणाविश्रमधाम, न तु व्यङ्ग्यार्थान्तरोपस्कारकमपि। यथा रसगङ्गाधरोदाहृते 'राघवविरह...' [रस० आ० १, पृ० ६३] इत्यादिपद्ये। 'कुप्यन्ति' इति कोपस्यैव व्यङ्ग्यार्थोपस्कृतस्य प्राधान्यम्, न तु तेनाप्यन्यद् ध्वन्यते।

यत्र तु वाच्यार्थतावच्छेदकमेव स्वरूपेणानुपपन्नं व्यङ्ग्यं स्वोपपादकतया न्यग्भावयति, यथा—'गच्छाम्यच्युत!' इत्यादिपद्ये 'आमन्त्रणभङ्गिसूचित—' इति सूचनपदार्थताऽवच्छेदकस्याच्युतादिपदध्वननीयार्थमन्तर्भाव्यैव निराकाङ्क्षशाब्दधीपर्यवसायित्वम्। तत्र विशिष्टबोधीयप्राधान्यविरहेऽपि

## यत्र व्यङ्ग्यं वाच्यानतिशायि तद्गुणीभूतव्यङ्ग्यम् ।

सुधा

गुणीभूतव्यङ्ग्यरूपमध्यमकाव्यस्य स्वरूपमाह—यत्रेति । यत्र काव्ये व्यञ्जनावृत्तिगम्यं वाच्यार्थं नातिशेते=नातिक्राम्यति, तद्गुणीभूतव्यङ्ग्यमित्यर्थः । तथा च वाच्यार्थनिष्ठचमत्कृतित्वावच्छिन्नप्रयुक्ततिरस्कारत्वावच्छिन्नाधिकरणव्यङ्ग्यत्वे सति शब्दार्थत्वं तत्त्वमिति लक्षणम् । व्यङ्ग्यचमत्कृतिसमानाधिकरण[त्व]रहितवाच्य-

कविसंरम्भपर्यवसानभूमितासामान्यात् पूर्वप्रदर्शितस्वरूपकत्वं न हीयते । अन्यथा 'स नास्ति कश्चिद् विषयः' इत्यादिप्रकाशदर्शितदिशा सामाजिकप्रतिभामात्रकल्पनीयव्यङ्ग्यविरहासम्भवेन सर्वस्यैव काव्यस्य मध्यमकाव्यदल एवोदाहरणीयतापत्तेः ।

अत एवाहुः—'प्राधान्येन व्यपदेशा भवन्ति' इति । प्राधान्यं चात्रार्थं न तु शाब्दम्, तस्य प्रवृत्त्यादावौदासीन्यात् ।

एवञ्च प्रकृतेऽधमपदव्यञ्जनीयसंभोगसम्भावकतामात्र उपयोक्ष्यमाणानां स्तनतटादिपदद्योत्यार्थानां गुणीभावेऽपि सम्भोगस्यावाच्यतया लक्षणाफलत्वेनालक्षणीयतया च स्वतर्कितत्वप्रकारकबुबोधयिषालक्षणार्थप्राधान्यसद्भावेन तत्प्रयुक्तमुत्तमत्वं को निवारयेत् । अन्यथा भवदुत्प्रेक्षितदिशापि वापीगमनोपपादकतामात्रेण गुणीभूतव्यङ्ग्यत्वं कथं निवारणीयम् । प्रत्युत, भवत्प्रदर्शितक्रम एव दोषो दुर्वारः; वापीगमनस्य वाच्यत्वात् । सम्भोगस्य तु व्यङ्ग्यत्वेन वैपरीत्यात् ।

यदि तु नायिकाविश्रान्तिभूमितायाः सम्भोग एव कल्पनेन परिहरिष्यसि तर्हि व्यङ्ग्यतामनपह्नुत्य तुष्यतु भवान् । अत एव च नायं काव्यलिङ्गस्य विषयः, उपपाद्योपपादकयोरुभयोरपि व्यङ्ग्यत्वात् । तटादिपदार्थानां केवलाभिधाबलेनोपस्थितानां स्नानसम्भोगसाधारणत्वेन विदग्धनायिकावैशिष्ट्यनिश्चयव्यञ्जनीयावधारणानां पुलकितेत्यत्र तथाविधविरोधस्य च व्यङ्ग्यताया दुरपह्नवत्वात् ।

यत्तु, सम्भोगस्य स्तनतटाद्यवधारणव्यञ्जनीयत्वाभ्युपगमेऽनुमानप्रकारान्तःपातितया व्यञ्जनाव्यापारनैरर्थक्यभयेन साधारण्येन बोधविषयतोपपादनम्, तत् प्रकाशपञ्चमोल्लासशेषदर्शितदिशाऽधमत्वादेरिव स्तनतटादिमात्रचन्दनच्यवनादेरपि प्रमाणप्रतिपन्नताविरहेणाप्रमाणस्यानुमापकतानङ्गीकारेण व्याप्तिपरामर्शज्ञाने अनपेक्ष्य प्रतिभामात्रद्योत्यतया अनुभवसिद्धत्वेन न किञ्चित् । इतरथा 'उज णिच्चल !' इत्यादावपि निस्पन्दत्वेनाश्वस्ततया अनुमेयत्वस्यैवापत्तेरिति निपुणतरमालोचनीयम्" इत्याहुः ।

यथा—

गच्छाम्यच्युत दर्शनेन भवतः किं तृप्तिरुत्पद्यते
किं त्वेवं विजनस्थयोर्हतजनः संभावयत्यन्यथा ।
इत्यामन्त्रणभङ्गिसूचितवृथावस्थानखेदालसा-
माश्लिष्यन् पुलकोत्कराञ्चिततनुर्गोपीं हरिः पातु वः ॥

सुधा

चमत्कारवत्त्वमेव मध्यमत्वमिति गङ्गाधरकृतः[1] । "अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम्[2]" इति प्रकाशलक्षणे तु व्यङ्ग्यपदमस्फुटतरातिरिक्तव्यङ्ग्यपरम् । तेनास्फुट-व्यङ्ग्ये नाव्याप्तिः, न वाधमकाव्येऽतिव्याप्तिः; तत्रास्फुटतरव्यङ्ग्यसत्त्वादिति प्रदीपादयः । व्यङ्ग्यपदं स्फुटव्यङ्ग्यपरम् । तेनाधमकाव्ये नातिव्याप्तिरिति व्याख्यानन्तु भ्रममूलकमेव, अस्फुटव्यङ्ग्यस्यासंग्रहापत्तेः ।

केचित्पुनः, यथाश्रुतकाव्यप्रकाशीयलक्षणस्याधमेऽतिव्याप्तिमाशङ्क्य चित्रान्यत्वे सति चमत्कारानाधायकव्यङ्ग्यवत्त्वमिति व्याचक्रुः ।

यत्तु गङ्गाधरकृता—'चित्रान्यत्वे सति' इत्युक्तौ पर्यायोक्तिसमासोक्त्यादि [दि] प्रधानकाव्येऽव्याप्तिः, तेषां गुणीभूतव्यङ्ग्यतायाश्चित्रतायाश्च सर्वालङ्का-रिकसम्मतत्वादिति । तन्न; 'गुणालङ्कारयुक्तस्यैव चित्रत्वम्' [3]इति प्रकाशकृता प्रतिपादितत्वात्, शब्दचित्रस्य[4] प्रायो नीरसत्वेनार्थचित्रमीमांसाप्रस्तावस्याप्पय-दीक्षितेनात्र सूचितत्वेनालङ्कारिकसम्मतत्वाभावादिति दिक् ।

तदुदाहरति–यथेति । तत्राप्यष्टधा भिन्ने मध्यमे वाच्यसिद्ध्यङ्गमुदाहरति–**गच्छा-मीति** । हे अच्युत ! अस्खलितधैर्य ! अहं गच्छामि, भवतो दर्शनेनालोकनमात्रेण किं प्रीतिरुत्पद्यते ! अपि तु नेति । किन्तु हतजनो नष्टो लोकः एवं विजनस्थयोः जनसञ्चाररहितवनस्थितयोः आवाम[वयोर]न्यथा सम्भावयति । एवमामन्त्रणमच्यु-तेति सम्बोधनम्, तस्य भङ्ग्या एतावत्काल स्थिताया मयि त्वद्रमणाभाव एवेति विच्छित्त्या सूचित वृथावस्थानम्, तस्य खेदेनालसामङ्गादिक मोटयन्तीं गोपी-माश्लिष्यन् पुलकानामुत्करेण समूहेनाञ्चिता तनुर्यस्य स हरिः वः पातु इत्यन्वयः ।

अत्र वक्रोक्तिरलङ्कारः[5] । वृथावस्थानखेदे अच्युतेत्यस्य पदार्थस्य हेतुत्वात्

१. रस० आ० १, पृ० ७० । २. का० प्र० उ० १, सू० ३ । ३. का० प्र० १, सू० ४ । ४. चि० मी० पृ० ५ ।

५. यदुक्तमन्यथा वाक्यमन्यथान्येन योज्यते ।
श्लेषेण काक्वा वा ज्ञेया सा वक्रोक्तिस्तथा द्विधा ॥
[का० प्र० उ० ९, सू० १०३]

**अत्र गच्छाम्यच्युतेत्याद्यामन्त्रणेन त्वया रन्तुमेतावत्कालं स्थितम्, तन्न लब्धमिति व्यङ्ग्यम्। तत्तु 'इत्यामन्त्रणभङ्गिसूचितवृथावस्थानखेदालसाम्' इत्येतद्वाच्यस्य सिद्धिं करोतीति तदङ्गत्वान्न वाच्यातिशायि। अतो गुणीभूतव्यङ्ग्यमिदम्।**

**यथा वा—**

प्रहरविरतौ मध्ये वाह्नस्ततोऽपि परेऽथ वा
किमुत सकले याते वाह्नि प्रिय त्वमिहैष्यसि।
इति दिनशतप्राप्यं देशं प्रियस्य यियासतो
हरति गमनं बालालापैः सबाष्पगलज्जलैः॥

**अत्र सकलमहः परमावधिः, ततः परं प्राणान् धारयितुं न शक्नोमीति**

**सुधा**

काव्यलिङ्गमलङ्कारः। "काव्यलिङ्गं हेतोर्वाक्यपदार्थता" [ का०प्र० उ० १०,सू०-१७४ ] इति काव्यप्रकाशोक्तेः। परकीया नायिका। शार्दूलविक्रीडितम् "सूर्याश्वैः······[ वृ० र० अ० ३,९८ ] इति तल्लक्षणस्योक्तेः।

अत्र वाच्यसिद्ध्यङ्गत्वप्रतिपादनाय व्यङ्ग्यमवतारयति—**अत्रेति**। 'गच्छाम्यच्युत' इत्यामन्त्रणेन त्व( यि ) [ या ] प्रमा[ रम ]णाय एतावत्कालं स्थितं न तल्लब्धम्, अस्खलनार्थत्वात्। एतद्व्यङ्ग्यम् 'इत्यामन्त्रण' इत्यादिवाच्यस्य सिद्धिकृद् इति प्रकारेण तदङ्गत्वात् व्यङ्ग्यस्य वाच्याङ्गत्वान्न वाच्यात्तस्यातिशय आधिक्यम्, अत इदं काव्यं गुणीभूतव्यङ्ग्यम्।

मध्यमकाव्यस्योदाहरणान्तरमाह—**यथा वेति**। हे प्रिय! प्रहरावसाने त्वमेष्यसि वा मध्याह्ने, अथवा मध्याह्नात् परत्र तृतीयप्रहरे, उत सकले यातेऽह्नि दिवसारम्भे [ वसाने ] किं वा इह त्वमेष्यसि! इति सबाष्पगलज्जलैरालापैर्दिनाना शतेन प्राप्तुं योग्यं देशं गन्तुमिच्छतः प्रियस्य बाला मुग्धा गमनं हरतीत्यन्वयः।

विरहासहिष्णु··तक[ नायाः प्रवास ] विप्रलम्भरसो[ स उ ]त्कर्षे हेतुः। जातिरलङ्कारः। नवोढेयम्। हरिणीवृत्तम्, "रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा" [ वृ० र० अ० ३, ९३ ] इत्युक्तेः।

अत्रापि वाच्यसिद्ध्यङ्गतां प्रतिपादयितुं व्यङ्ग्यमाह—**अत्रेति**। परमावधिः सकलदिवसः। तदनन्तरं प्राणधारणमशक्यमिति व्यङ्ग्यं गमननिवृत्तिरूपवाच्यसिद्धिकृद् इति वाच्याङ्गत्वाद् व्यङ्ग्यं वाच्यार्थादत[ ति ]शायि नेतीदमपि गुणीभूतव्यङ्ग्यम्।

यत्तु **गङ्गाधरकृता** सबाष्पगलज्जलानां प्रियालापानामेव प्रियगमननिवारण-

व्यङ्ग्यं प्रियगमननिवारणरूपस्य वाच्यस्य सिद्धिं करोतीति तदङ्गत्वा-द्वाच्यानतिशायि। अत इदमपि गुणीभूतव्यङ्ग्यम्।

**यदव्यङ्ग्यमपि चारु तच्चित्रम्।**

**तत्त्रिविधम्—शब्दचित्रम्, अर्थचित्रम्, उभयचित्रमिति।**

## सुधा

रूपवाच्यसिद्ध्यङ्गतया व्यङ्ग्ये न गुणीभावत्वम्, आलापैरिति तृतीयया हरणक्रियां प्रति करणत्वस्य प्रतिपत्तेः। तद्वाच्यसिद्ध्यङ्गतासम्भवमात्रेणोक्तौ 'निःशेषच्युत' इत्यादावधमत्वरूपवाच्यसिद्ध्यङ्गत्वस्य दूतीसम्भोगादौ सम्भवाद् मध्यमत्वापत्तेः। अस्तु वा प्राणधारणाशक्यत्वरूपव्यङ्ग्यस्य वाच्यसिद्ध्यङ्गतया गुणीभावस्तथापि नायकादेर्विभावस्य बाष्पादेरनुभावस्य, चिन्तावेगादेश्च सञ्चारिणः, संयोगादभि-व्यज्यमानेन विप्रलम्भेन ध्वनित्वस्य निवारणासम्भवादिति प्रतिपादितम्। तदसत्। तादृशालापाना तस्या मुग्धात्वद्योतनतात्पर्यतया वाच्यसिद्ध्यङ्गत्वाभावात्। मुग्धोप-लक्षणे तृतीयाविभक्तेः सत्त्वाच्च, दूतीसम्भोगरूपहीनकर्मत्वाकारेण तत्पर्यवसाने साध-कत्वात्, वाच्याङ्गत्वाभावाच्च। तादृशविप्रलम्भजन्यप्राणधारणाशक्यतायास्तन्निवारणे तात्पर्यस्य वक्तु योग्यत्वाच्च। प्रथमोदाहरणे राजविषयकभावध्वनेरुत्तरत्र स्पष्टतया सङ्कीर्णत्वम्। उत्तरस्य तु शुद्धवाच्याङ्गत्वमिति भेदः।

क्रमप्राप्तस्य तृतीयभेदस्य चित्रस्य लक्षणमाह—**यदिति**। यत् काव्यमव्यङ्ग्यम्, अस्फुटतरातिरिक्तव्यङ्ग्यरहितं चारुगुणालङ्कारान्यतरचमत्कृतियुतं तच्चित्रमित्यर्थः। तथा चास्फुटतरातिरिक्तव्यङ्ग्यरहितत्वे सति गुणालङ्कारनिरूपितचमत्कारवत्त्वं तत्त्वमित्यर्थः।

केचित्तु—अव्यङ्ग्यम् = अस्फुटव्यङ्ग्यम्। स्फुटत्वन्तु कवितात्पर्यविषयविशेष-वत्त्वम्। तथा च विशेषतः कवितात्पर्यरहितत्वे सति गुणालङ्कारनिरूपितचमत्कार-वत्त्वमित्याहुः।

तद्विभागमाह—**तदिति**। तच्चित्रं काव्यं त्रिविधं त्रिप्रकारकमित्यर्थः। द्विविधमेव चित्रमिति **प्रकाशादयः**। ततो विशेषप्रतिपादकं त्रिविधमिति विशेषणम्। तदाह—**शब्दचित्रमित्यादि**। तादृशव्यङ्ग्यत्वे सति शब्दविषयकगुणालङ्कारचमत्कृति-विशेषवत्त्वमाद्यम्। अर्थोपयोगिगुणालङ्कारचमत्कारवत्त्वे सति तादृशव्यङ्ग्यवत्त्वं द्वितीयम्। उभयविषयकगुणालङ्कारचमत्कृतिमत्त्वे सति तादृशव्यङ्ग्याश्रयत्वं तृतीय-मिति समुदायार्थः।

शब्दचित्रं यथा—

नवपलाशपलाशवनं पुरः स्फुटपरागपरागतपङ्कजम् ।
मृदुलतान्तलतान्तमलोकयत् स सुरभिं सुरभिं सुमनोभरैः ॥

अर्थचित्रं यथा—

स छिन्नमूलः क्षतजेन रेणुस्तस्योपरिष्टात्पवनावधूतः ।
अङ्गारशेषस्य हुताशनस्य पूर्वोत्थितो धूम इवाबभासे ॥

सुधा

तत्राद्यमुदाहरति—**शब्दचित्रं यथेति** । माघकाव्ये वसन्तदर्शनं कृष्णस्येति । **नवपलाशेति** । स हरिः, पुरोऽग्रे प्रथमं वा नवानि पलाशानि पर्णानि "पलाशः किंशुके पर्णे" इति विश्वः । येषां तानि । पलाशानां किंशुकानां वनानि यस्मिन् तम् । स्फुटानि विकचानि, परागैः रजोभिः "परागः सुमनोरजः" [ का० २, ४, १७ ] इत्यमरः । परागतानि व्याप्तानि पङ्कजानि कमलानि यस्मिन् तमित्यर्थः । अत एव मृदुला कोमला तान्ता आतपसमये किञ्चिन्म्लाना लतान्ताः पल्लवा यस्मिन्तम् । सुमनोभरैः पुष्पसमृद्धिभिः सुरभिं सुगन्धं मनोज्ञं वा, सुरभिं वसन्तम्, अलोकयत् अपश्यत् । "सुरभिश्चम्पके स्वर्णे जातीफलवसन्तयोः, सुगन्धौ च मनोज्ञे" इति विश्वः । इह प्रतिपदमक्षरत्रयावृत्तिरूपो यमकालङ्कारः ।

"अर्थे सत्यर्थभिन्नानां वर्णानां सा पुनः श्रुतिः, यमकम् ।"

[ का. प्र. उ. १०, सू. ११७ ]

इति प्रकाशोक्तेः । वृत्त्यनुप्रासश्च, 'एकस्याप्यसकृत्परः' [का. प्र. उ. १०, सू. १०७] इत्युक्तेः । सजातीययोरेतयोः संसृष्टिः, "सेष्टा संसृष्टिरेतेषां भेदेन यदिह स्थितिः" [ का० प्र० उ० १०, सू० २०७ ] इति तल्लक्षणात् । द्रुतविलम्बितं वृत्तम्, "द्रुतविलम्बितमाह नभौ भरौ" [ वृ० र० अ० ३, ५० ] इति वृत्तरत्नाकरोक्तेः ।

अत्र द्वयोः शब्दालङ्कारयोश्चमत्कृतिहेतुत्वेन शब्दचित्रत्वव्यवहारः ।

अर्थचित्रमुदाहरति—**अर्थचित्रं यथेति** । स इति । रघुवंशेऽजसंग्रामवर्णनम् । क्षतजेन रुधिरेण च्छिन्नमूलो लूनभूतलसम्बन्धः, तस्य क्षतजस्योपरिष्टात् पवनेनावधूतः कम्पितः स रेणुः । "रेणुर्द्वयोस्त्रियां धूलिः" [ का० २, ८, ९८ ] इत्यमरः । अङ्गारशेषस्य हुताशनस्याग्नेः पूर्वोत्थितो धूम इवाबभासे दिदीपे ।

रेणुमध्ये धूमसम्भावनयोत्प्रेक्षालङ्कारः । "सम्भावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्" [ का० प्र० उ० १०, सू० १३७ ] इति प्रकाशोक्तेः ।

"मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः ।
उत्प्रेक्षा व्यज्यते शब्दैरिव शब्दोऽपि तादृशः ॥"

इत्युत्प्रेक्षाव्यञ्जकशब्देषु सम्भावनार्थकेवशब्दस्य तद्वाचकत्वप्रतिपादनात् ।

**उभयचित्रं यथा—**

वराहः कल्याणं वितरतु स वः कल्पविरमे
विनिर्धुन्वन्नौदन्वतमुदकमुर्वीमुदवहत् ।
खुराघातत्रुट्यत्कुलशिखरिकूटप्रविलुठ-
च्छिलाकोटिस्फोटस्फुटघटितमाङ्गल्यपटहः ॥

**तदेवं त्रिविधे ध्वनिगुणीभूतव्यङ्ग्ययोरन्यत्रास्माभिः प्रपञ्चः कृतः ।**

**सुधा**

इन्द्रवज्राच्छन्दः । "स्यादिन्द्रवज्रा यदि तौ जगौ ग." [ वृ० र० अ० ३, ३० ] इति तल्लक्षणात् ।

अर्थालङ्कारभूताया उत्प्रेक्षायाश्चमत्कृतिहेतुत्वेनार्थचित्रत्वव्यवहार इति बोद्धव्यम् ।

उभयचित्रमुदाहरति—**वराह** इति । कल्पविरमे कल्पावसाने, उदन्वत उदधेरिदम् औदन्वतम् "उदन्वानुदधिः सिन्धुः" [ का० १,१०,१ ] इत्यमरः । उदकं जलम्, विनिर्धुन्वन् कम्पयन्, उर्वी पृथिवीमुदवहत् । उदके प्रापयन् धारयन् वा स वराहो भगवान् वो युष्माकम् "बहुवचनस्य वस्नसौ" [ पा० सू० ८।१।२१ ] इति वसादेशः । कल्याणं मङ्गलं वितरतु ददात्वित्यर्थः । "आशिषि लिङ्लोटौ" [ पा० सू० ३।३।१७३ ] इति लोट् । कीदृशो वराहः ? खुराणां तैर्वा आघात-स्ताडनं तेन त्रुट्यन्तो ये कुलपर्वतानां कूटाः शिखराणि तेभ्यः प्रविलुठन्त्य. शिला दृष[ प ]दः, तासां स्फोटः स्फोटनम्, तदेव स्फुटं घटितो माङ्गल्यपटहो मङ्गलार्थं आनतो येन तादृश इत्यर्थः । वृत्त्यनुप्रासोऽत्र शब्दालङ्कारः, रूपकञ्चार्थालङ्कारः । "तद्रूपकमभेदो य उपमानोपमेययोः" [ का० प्र० उ० १० सू० १३९ ] इत्युक्तेः । शिखरिणीच्छन्दः । "रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी" [ वृ० र० अ० ३, ९० ] इति तल्लक्षणात् । अत्रोभयोरलङ्कारयोश्चमत्कृतिहेतुत्वादुभयचित्रत्वमिति बोध्यम् ।

अथारम्भप्रकरणमुपसंहरति—**तदेवमिति** । ध्वनिगुणीभूतचित्रभेदेन त्रिविधे काव्ये ध्वनिगुणीभूतव्यङ्ग्ययोः प्रपञ्चो विस्तररचनाविशेषोऽन्यत्र ग्रन्थे कृतः । त्रिविधे चित्रे आद्यस्य शब्दचित्रस्य प्रायो नीरसत्वात्, तत्र व्यङ्ग्यसत्त्वेऽपि कविसंरम्भविषय-त्वाभावात् प्राय इत्युक्तिः, अनुप्रासमात्रे तत्संरम्भात् कवयः=ध्वनिरसाभिज्ञाः, तत्=शब्दचित्रं नात्यन्तमाद्रियन्ते न तदादरनिरूपणं कुर्वन्ति । तत्र=शब्दचित्रे विचारणीयं विचारयितुं योग्यं वाऽतीव नोपलभ्यत इति शब्दचित्रमपहाय त्यक्त्वा, अर्थचित्रेऽर्थालङ्कारचमत्कृतियुते काव्ये मीमांसा=विचारणा, अत्यन्तं विस्तीर्णा विस्तृता प्रस्तूयते प्रारभ्यत इति समुदायार्थः ।

ग्रन्थ[ काव्य ]प्रकाशकारस्तु—"शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम्" [ का० उ० १, सू० ४ ] इति द्विविधमेव चित्रमाह ।

यत्तु प्रकाशमतमुद्दिश्य दर्पणकारा:[1]—'अत्र केचिच्चित्राख्यं तृतीयं काव्यभेदमिच्छन्ति । तदाहुः 'शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम्' इति, तन्न, किमिदमव्यङ्ग्यत्वं नाम ? व्यङ्ग्यत्वाभाव इति चेत् ? अनात्मवत्त्वेन काव्यत्वहानिः, यत्किंचिद्व्यङ्ग्यशून्यत्वमिति चेत् ? किमिदं यत्किञ्चिदिति ? आस्वाद्यव्यङ्ग्यत्वम्, नास्वाद्यव्यङ्ग्यत्वम् ? नाद्यः, पूर्वत्रान्तर्भावापत्तेः । नान्त्यः, दत्तसमाधानत्वात् ।

तदुक्तं ध्वनिकृता—

प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैवं व्यवस्थिते ।
उभे काव्ये ततोऽन्यद्यत्तच्चित्रमभिधीयते ॥

[ध्वन्या० ३, ४८]

इति दूषणं व्याचक्रुः । तन्न; अर्थचित्रप्रतिपादकोपमाद्यलङ्कारघटितकाव्यानां चित्रत्वेनालङ्कारिकसम्मतत्वात् तेषां काव्यत्वाभावप्रसङ्गात्, अव्यङ्ग्यकाव्यस्य चित्रत्वेन ध्वनिकर्तुरभिमतत्वाच्च; अव्यङ्ग्यपदस्यास्फुटतरातिरिक्तव्यङ्ग्यपरत्वस्य प्रदीपादिभिर्व्याख्यातत्वाच्च[2]; प्रकृतग्रन्थस्य सर्वथानुपपत्तेरिति दिक् ।

**रसगङ्गाधरकृतस्तु**[3]—यत्रार्थचमत्कृत्युपस्कृता शब्दचमत्कृतिः प्रधानं तदधमम् । यथा—

मित्रात्त्रिपुत्रनेत्राय त्रयीशात्रवशत्रवे ।
गोत्रारिगोत्रजत्राय गोत्रात्रे ते नमो नमः[4] ॥

अत्रार्थचमत्कृतिः शब्दचमत्कृतौ लीना । अर्थचमत्कृतिसामान्यशून्यशब्द

---

१—सा० द० परि० ४, पृ० १५५

२. का० प्र० उ० १, ५ ।

३. रस० आ० १, पृ० ७२-७५ ।

४. मित्रः सूर्योऽत्त्रिपुत्रश्चन्द्रश्च नेत्रे यस्य तस्मै; त्रय्या ऋग्यजुस्सामवेदानां शात्रवस्यापहारकतया रिपोर्हयग्रीवदैत्यस्य शत्रवे नाशकाय; गोत्राणां गिरीणां पक्षच्छेदनादरेरिन्द्रस्य गोत्रजान् वंश्यान् देवांस्त्रायते रक्षतीति तथाभूताय, गोः पृथिव्या गवां धेनूनां वा त्रात्रे रक्षकाय ते विष्णवे नमो नमोऽस्तु । इति विष्णुपक्षेऽर्थः ।

शिव पक्षे तु त्रय्या ध्वंसनाच्छात्रवाणामसुराणाम्, यद्वा त्रय्या विज्ञानप्रतिबन्धनाच्छात्रवस्य कामदेवस्य शत्रवे, गोवृषस्य त्रात्रे ते शिवायेति विशेषः । [ रस० चन्द्रिका ]

चमत्कृतिमत्त्वम् [ त् ] अधमाधममपि काव्यं वक्तुं शक्यम्। यथा खड्गबन्धादि। तथापि रमणीयार्थप्रतिपादकशब्दत्वरूपकाव्यत्वलक्षणानाक्रान्ततया तत्र काव्यत्वाभावे तन्मध्ये गणनानौचित्यात्।

केचित्तु[1]—उत्तममध्यमाधमभेदेन त्रिविधमेव काव्यमाचक्षते। तत्रार्थचित्रशब्द-चित्रयोरविशेषेणाधमत्वं वक्तुमयुक्तम्, तारतम्यस्य स्फुटमुपलब्धेः। को ह्येवं सहृदयः सन् 'विनिर्गतं मानदमात्ममन्दिरात्', 'सच्छिन्नमूलः क्षतजेन रेणुः' इत्यादिभिः काव्यैः 'स्वच्छन्दोच्छलदच्छ ···' इत्यादीनां पामरश्लाघ्यानामविशेष ब्रूयात्। सत्यपि तारतम्ये यद्येकमे [ दत्वं ] कस्तर्हि ध्वनिगुणीभूतव्यङ्ग्ययोरीषदन्तरयोर्भिन्न-भेदत्वे दुराग्रह इत्याहुः।

तदपि न। ( यम [ क ] बन्धादिवत् सु ) मित्रेत्यादिपद्येषु शब्दोपयोग्यनु-प्रासादेः सत्त्वाद[ न ]न्तर्भावः। अत एवात्र च शब्दचित्रत्वम्[2]।

त्यो [ सोऽ ] लङ्कृतिश्च काव्यचमत्कृतिहेतुरिति सिद्धान्तस्य प्रदीपादौ[3] दृष्टत्वात्, तयोरन्यतरसत्त्वे काव्यत्वं नास्तीति वक्तुमयोग्यत्वात्।

यत्तु शब्दचित्रार्थचित्रयोर्विशेषवत्त्वेनाधमत्वमयुक्तम्, तदपि न; न वय तयोर्विशेषो नास्तीति ब्रूमः, किन्तु गुणालङ्कारोपयोगित्वस्य चित्रत्वस्योभयत्र समानत्वादधमत्वमिति ब्रूमः। [ चित्रत्व ] रूपेण विशेषाभावसत्त्वात्, शब्दचित्रे-ष्वपि व्यङ्ग्यसत्त्वात् पामरश्लाघ्यत्वस्य त्वया वक्तुमयोग्यत्वात्। ध्वनिगुणीभूत व्यङ्ग्ययोर्व्यङ्ग्यवाच्यार्थचमत्कृतिरूपविशेषस्य महतः सत्त्वेन भिन्नभेदत्वमावश्यकमेव। न हि शब्दार्थालङ्कारयोरेकस्याचारुत्वमपरस्य चारुतेति काव्यवित्सम्मतम्। चम-त्कृतिजनकत्वावच्छेदकताया द्वयोस्तुल्यत्वात्। 'यद्यपि सर्वत्र काव्येऽन्ततो विभा-वादिरूपतया व्यङ्ग्यपर्यवसानम्' तथापि स्फुटव्यङ्ग्यतया तदनुलम्भादव्यङ्ग्यमेतत् काव्यद्वयम् इति तयोरविशेषस्य षष्ठे काव्यप्रकाशकृता स्फुटं प्रतिपादितत्वात्। अस्य च शब्दार्थालङ्कारभेदाद् बहवो भेदाः। एतेन 'उत्तमगुणीभूतव्यङ्ग्ययोर्भे—दयोर्जागरूकाजागरूकव्यङ्ग्ययोर्निखिलमलङ्कारप्रधान काव्य निविष्टम्' इत्यप्यपास्तम्, अजागरूकव्यङ्ग्येनाधमत्वस्यैव वक्तव्यत्वात्। अयन्तु विशेषः, यमकबन्धादि-रचनावति काव्ये दुष्टत्वम्, शीघ्रमर्थानवबोधात्।

---

१. काव्यप्रकाशकारप्रभृतय इत्यर्थः। आद्यं पद्यं मम्मटभट्टेन, द्वितीयमप्पय्यदी-क्षितेन चार्थचित्रोदाहरणतयोपन्यस्तम्, तृतीयन्तु मम्मटेन शब्दचित्रोदाहरण-तयेति ज्ञेयम्।

२. रसगङ्गाधरकृतोक्तमिति शेषः।

३. का० प्र१ उ० १, काव्यलक्षणनिरूपणावसरे।

**शब्दचित्रस्य प्रायो नीरसत्वान्नात्यन्तं तदाद्रियन्ते कवयः, न वा तत्र विचारणीयमतीवोपलभ्यत इति शब्दचित्रांशमपहायार्थचित्रमीमांसा प्रसन्नविस्तीर्णा प्रस्तूयते ।**

चिन्त्येऽत्र चित्रवर्गे प्रदर्श्ययोर्लक्ष्यलक्षणयोः ।
प्राचीनानामेव श्लोकाः प्रायेण लिख्यन्ते ॥

**इति चित्रमीमांसायां ग्रन्थारम्भप्रकरणम्**

**सुधा**

शब्दचित्रादावर्थस्य शीघ्र बोधादव्यङ्ग्यत्वेनाधमत्वमात्रं न पुनर्दुष्टत्वम्, अलङ्कारविषयनिबन्धस्य चित्रत्वेन काव्यताया ध्वनिकारादिसम्मतत्वाच्चेत्यलम् ।

ग्रन्थस्य सप्रमाणतां वक्तुमाह—**चिन्त्य** इति । अत्र चिन्त्ये विचारयोग्ये चित्र-वर्गेऽलङ्कारसमूहे प्रदर्शयितुं योग्ययोर्लक्ष्यलक्षणयोः स्वरूपोदाहरणयोः प्राचीनानामेव श्लोकाः प्रायेण लिख्यन्ते प्रतिपाद्यन्ते । तथा चात्र ग्रन्थे लक्षणोदाहरणप्रतिपादक-श्लोकाना प्राचीनकृतत्वेन (स) प्रामाण्यमुपपादितम् । क्वचित् स्वकृतश्लोकाना-मपि लेखनेन प्राय इत्युक्तम् ।

उपगीतिरत्र वृत्तम्—
"आर्या द्वितीयकेऽर्द्धे यद् गदित लक्षण तत् स्यात् ।
यद्युभयोरपि दलयोरुपगीति ता मुनिर्ब्रूते ॥"
[वृ. र. अ. २,९] इति रत्नाकरोक्तेः ।

**धरानन्देन** रचितो ग्रन्थारम्भो यथा [ मति ] ।
व्याख्याया **चित्रमीमांसा-सुधायामाप** पूर्णताम् ॥
इति **चित्रमीमांसा**व्याख्याया सुधाभिधाया ।
ग्रन्थारम्भप्रकरण सम्पूर्णतामगमत् ॥

शुभमस्तु ।



# अथोपमानिरूपणम्

उपमैका शैलूषी सम्प्राप्ता चित्रभूमिकाभेदान् ।
रञ्जयति काव्यरङ्गे नृत्यन्ती तद्विदां चेतः ॥

**चन्द्र इव मुखमिति सादृश्यवर्णनं तावदुपमा । सैवोक्तिभङ्गी-सुधा**

तत्र— यत् किञ्चित्काव्यबन्धेषु सादृश्येनोपमीयते ।
उपमा नाम सा ज्ञेया गुणाकृतिसमाश्रया ॥

इति भरतेनार्थालङ्कारेषूपमायाः प्रथमकथनेन तदुक्त्या स्वयमपि तां वक्तुमुपमायाः सर्वालङ्कारबीजतां प्रतिपादयन्ति—**उपमैकेति** । एकोपमा शैलूषी नटी, चित्रभूमिकाभेदान् अलङ्काररूपस्थितिभेदान् सम्प्राप्ता तत्तद्रूपतां प्राप्ता काव्यमेव रङ्गभूमिः, तत्र नृत्यन्ती नृत्याभिनयरूपतत्तदलङ्कारव्यापारं कुर्वन्ती, तद्विदामलङ्कारविदां चेतश्चित्तं रञ्जयति अनुरागि करोति । अत्रोपमाया नटीत्वारोपः, अलङ्कारेषु भूमिका[त्वा]रोपः, काव्ये रङ्गभूमित्वारोपः, तद्विदां रञ्जनाप्रतिपादनार्थमिति परम्परितरूपकमलङ्कारः ।

"नियतारोपणोपायः स्यादारोपः परस्य यः । तत्परम्परितम्०" [ का. प्र. उ. १०,१४५ ] इति प्रकाशोक्तेः । आर्यावृत्तम् ।

उपमाया अलङ्कारभेदेन स्थितिभेदं निरूपयितुं विच्छित्तिभेदेन सर्वालङ्काररूपतां प्रतिपादयितुमारभन्ते—**चन्द्र इव मुखमितीति** । सादृश्यमुपमानोपमेययोरिति शेषः । तावत् स प्रथममुपमालङ्कारो भवति । सा उपमैवोक्तिविच्छित्तिभेदेनानेकालङ्कारस्वरूपतां भजते, अङ्गीकरोतीत्यर्थः । अलङ्कारत्वञ्च—रसादिभिन्नव्यङ्ग्यभिन्नत्वे सति शब्दार्थान्यतरनिष्ठा या विषयितासम्बन्धावच्छिन्ना चमत्कृतिजनकतावच्छेदकता तदवच्छेदकत्वम् । अनुप्रासादौ तद्विशिष्टशब्दज्ञानादुपमादौ तद्विशिष्टार्थज्ञानात् चमत्कृतिजनक[त्व]तया द्वयोर्लक्षणसमन्वयः । शब्दार्थयोर्ज्ञाननिष्ठचमत्कृतिजनकताया विषयतयावच्छेदकतया तद्विशेषणीभूतानुप्रासोपमादेस्तन्निष्ठावच्छेदकतावच्छेदकत्वात् । रसवदाद्यलङ्कारसङ्ग्रहाय व्यङ्ग्योपमावारणाय च भेदद्वयगर्भसत्यन्तोपादानमिति **कुवलयानन्दव्याख्याकृतः**[1] ।

---

१. अ० च० श्लो० ४, पृ. १५ ।

**भेदेनानेकालङ्कारभावं भजते। तथा हि—'चन्द्र इव मुखं मुखमिव चन्द्रः'** इत्युपमेयोपमा। **'मुखं मुखमिव'** इत्यनन्वयः। **'मुखमिव चन्द्रः'** इति प्रतीपम्। **'चन्द्रं दृष्ट्वा मुखं स्मरामि' इति** स्मरणम्। **'मुखमेव चन्द्रः' इति** रूपकम्। **'मुखचन्द्रेण तापः शाम्यति' इति** परिणामः। **'किमिदं मुखमुताहो चन्द्रः' इति** सदेहः। **'चन्द्र इति चकोरास्त्वन्मुखमनुधावन्ति' इति** भ्रान्तिमान्। **चन्द्र इति चकोराः कमलमिति चञ्चरीकास्त्वन्मुखे रज्यन्ति'** इत्युल्लेखः। **'चन्द्रोऽयं न मुखम्'** इत्यपह्नवः। **'नूनं चन्द्रः'** इत्युत्प्रेक्षा। **'चन्द्रोऽयम्'** इत्यतिशयोक्तिः। **'मुखेन चन्द्रकमले निर्जिते' इति** तुल्ययोगिता। **'निशि चन्द्रस्त्वन्मुखं च**

**सुधा**

नव्यास्तु—शब्दार्थोपस्कृतिनिष्ठचमत्कृतिजनकतावच्छेदकत्वे सति व्यङ्ग्यभिन्न-[त्वे सति]संयोगसम्बन्धेन रसोपकारकत्व तत्त्वमिति वदन्ति।

प्राञ्चस्तु—व्यङ्ग्योपमाया अलङ्कारत्वं वदन्ति। दीक्षितास्तु—तस्यास्तत्त्वं नाङ्गीकुर्वन्ति। परन्तु प्रधानभूतोपमायास्तत्त्वाङ्गीकारे किं बीजमिति न विद्मः।

उपमाया अनेकालङ्काररूपतामुक्तिभेदेन दर्शयति—**तथा हीति। चन्द्र इवेति।** वाक्यभेदेनोपमानोपमेयत्वरूपोपमेयोपमा तृतीयसदृशनिषेधात् पृथक्। मुखं मुखमिवेत्यनन्वयः। एकस्यैवोपमानोपमेयतावच्छेदकत्वाद् द्वितीयसदृशव्यवच्छेदात् पृथगुक्तिः। 'मुखमिव चन्द्रः' इति प्रतीपम्, प्रसिद्धोपमानप्रतिकूलधर्मवत्त्वस्य सत्त्वात्। प्रतिकूलत्वञ्च तिरस्कारप्रयोजकत्वमिति नव्याः। उपमानतिरस्कारादुपमाभेदः। 'चन्द्रं दृष्ट्वा मुखं स्मरामि' इति स्मरणम्। स्मरामीत्यनुभवमाक्षिततया सिद्धास्य [स्मृतित्व]जातिस्तत्र। मुखमेव चन्द्र इति रूपकम्, उपमानोपमेययोरभेदस्यात्र सत्त्वात्। 'मुखचन्द्रेण तापः शाम्यति' इति परिणामः। विषयनिष्ठायाः प्रकृतकार्योपयोगिताया अवच्छेदिका विषयात्मतापरिणतिः। तस्या अत्र सत्त्वात्। 'किमिदम्'इत्यादि सन्देहः, निश्चयभिन्नत्वे सति सम्भावनाभिन्नज्ञानवत्त्वस्य सत्त्वात्। चन्द्र इत्यादि भ्रान्तिमान्, विशेष्यावृत्तिप्रकारकज्ञानवत्त्वस्य सत्त्वात्। 'चन्द्र इति' इत्यादिरुल्लेखः, ग्रहीतृविषयाद्यन्यतमानेकत्व (प्रकारक)[1] प्रयुक्तस्यैकस्योल्लिख्यमानानेकत्वप्रकारत्वस्य सत्त्वात्। 'चन्द्रोऽयम्'इत्यपह्नुतिः, अभेद(भेद)[2] प्रतिपत्तिनिरूपिताङ्गाङ्गिभावान्यतरवन्निषेधस्य सत्त्वात्। 'नूनं चन्द्रः' इत्युत्प्रेक्षा,विषयिनिष्ठधर्मसम्बन्धप्रयुक्तविषयिधर्मिकताशक्य[तादात्म्य]सम्बन्धावच्छिन्नविषयिविधेयकाहार्यसम्भावनस्य त[स]त्त्वात्। चन्द्रनिष्ठाह्लादकत्वादिधर्मसम्बन्धप्रयुक्ततत्सभावन-

१. निष्प्रयोजनमिदम्। २. नापेक्ष्यते, असङ्गतेः।

हृष्यति' इति दीपकम्। 'त्वन्मुख एवाहं रज्यामि चन्द्र एव चकोरो रज्यते' इति प्रतिवस्तूपमा। 'दिवि चन्द्रो भुवि त्वन्मुखम्' इति दृष्टान्तः। 'मुखं चन्द्रश्रियं बिभर्ति' इति निदर्शना। 'निष्कलङ्कं मुखं चन्द्राद्तिरिच्यते' इति व्यतिरेकः। 'त्वन्मुखेन समं चन्द्रो निशासु हृष्यति' इति सहोक्तिः। 'मुखं नेत्राङ्करुचिरं स्मितज्योत्स्नोपशोभितम्' इति समासोक्तिः। 'अब्जेन सदृशं वक्त्रं हरिणाहितसक्तिना' इति श्लेषः। 'मुखस्य पुरतश्चन्द्रो निष्प्रभः' इत्यप्रस्तुतप्रशंसा। एवमुक्तानेकालङ्कार-विवर्तवतीयमुपमा।

तदिदं चित्रं विश्वं ब्रह्मज्ञानादिवोपमाज्ञानात्।
ज्ञातं भवतीत्यादौ निरूप्यते निखिलभेदसहिता सा॥

**सुधा**

स्याहार्यरूपस्य मुखे सत्त्वेन तत्समन्वयाच्च। 'चन्द्रोऽयम्' इत्यतिशयोक्तिः, अनुपात्त-विषयधर्मिकाहार्यनिश्चयविषयीभूतविषय्यभेदताद्रूप्यान्यतरत्वस्य तल्लक्षणस्य तत्र सत्त्वात्। 'मुखेन' इत्यादि तुल्ययोगिता, अनेकप्रस्तुतमात्रसम्बद्धैकचमत्कारिधर्म-तादृशाप्रस्तुतधर्मान्यतरत्वस्य विद्यमानत्वात्। 'निशि चन्द्रः' इत्यादि दीपकम्, वर्ण्यावर्ण्यान्वितत्वैकचमत्कृतित्वावच्छिन्नधर्मवत्त्वस्य सत्त्वात्। 'त्वन्मुख एवाहं रज्यामि'इत्यादि प्रतिवस्तूपमा, सकृद्धर्मोक्तिप्रसङ्गेनासकृद्धर्मोक्तिगम्यवाक्यार्थ-सादृश्यत्वल्लक्षणस्य समन्वयात्। 'दिवि चन्द्रस्त्वन्मुखं भुवि' इति दृष्टान्तः, बिम्बप्रति-बिम्बभावावच्छिन्नोपमानोपमेय(घटक)वाक्यार्थघटकधर्मवत्त्वस्य सत्त्वात्। 'मुखं चन्द्रश्रियं बिभर्ति' इति निदर्शना, उपमेयवाक्यार्थे उपमानवाक्यार्थैक्यारोपवत्त्वस्य सत्त्वात्। 'निष्कलङ्कं मुखम्' इत्यादि व्यतिरेकः, उपमानावधितदुपमेयाधिक्य-वर्णनात्। 'त्वन्मुखेन समम्' इत्यादि सहोक्तिः, चमत्कृतिजनकतारूपसाहित्यवत्त्व-सत्त्वात्। 'रम्यं नेत्रोत्पलं विना भृङ्गाञ्जनं न सह्यम्' इति विनोक्तिः,[1] केचिद् ...[किञ्चिद्] व्यतिरेकेण अस्तु अस्य....[प्रस्तुतस्य]रम्यत्वान्य...[रम्यत्वान्यतर] धर्मवत्त्वसत्त्वात्। 'मुखं नेत्राङ्कम्' इत्यादि समासोक्तिः, विशेषणमात्रसाम्यगम्याप्रस्तुत-वृत्तान्तस्य सत्त्वात्। 'अब्जेन सदृशम्' इत्यादि श्लेषः, अनेकार्थाधिकरणशब्दसत्त्वात्। 'मुखस्य पुरतः' इत्याद्यप्रस्तुतप्रशंसा, प्रकृतार्थप्रतिपादकाप्रकृतार्थवत्त्वस्य सत्त्वात्।

प्रकरणमुपसंहरति—एवम् = पूर्वोक्तप्रकारेण, अलङ्काररूपो यो विवर्तः = उपा-दानविषमसत्ताकोऽन्यथाभावः, तद्वती तदधिष्ठानेति, तदाश्रया इत्यर्थः। तदेवोप-पादयन् प्रथमनिरूपणीयतां तस्याः प्रतिपादयति—तदिदमिति। तत् = तस्मात्,

1. अयं पाठः १९४१ तमे मोहमयीस्थे ( बाम्बे ) निर्णयसागरमुद्रणालये मुद्रिते पुस्तके नास्ति।

अस्यास्तावदेवं लक्षणमाहुः—

उपमानोपमेयत्वयोग्ययोरर्थयोर्द्वयोः ।
हृद्यं साधर्म्यमुपमेत्युच्यते काव्यवेदिभिः ॥

सुधा

यतः सर्वालङ्कारविवर्त्ताधिष्ठानवतीयमुपमा, तस्मादित्यर्थः । इद चित्रमलङ्कारविषयं विश्वं जगद् ब्रह्मज्ञानादिवोपमाज्ञानात् ज्ञातं ज्ञानविषयीभूत भवति । यथा ब्रह्मज्ञानाद् विश्व ज्ञान भवति, तद्वदुपमाज्ञानादलङ्कारविषयमपीत्यर्थः । ब्रह्मव्यतिरेकेण विश्वमिवोपमाव्यतिरेकात् तदभाव इति यावत् । इति हेतोरादौ निखिलैर्भेदैः सहिता सोपमा निरूप्यते । उपमालङ्कारः, "साधर्म्यमुपमा भेदे" [ का. प्र. १०. सू. १२५ ]इति तल्लक्षणात् । तस्याः, प्रथमनिरूपणहेतुत्वेन काव्यलिङ्गरूपवाक्यार्थतालङ्कारः, 'काव्यलिङ्ग हेतोर्वाक्यपदार्थता [का. प्र. उ. १० सू. १७४] इति प्रकाशोक्तेः ।

गीतिरत्र वृत्तम्—

आर्या प्रथमदलोक्त यदि कथमपि लक्षण भवेदुभयोः ।
दलयोः कृतयतिशोभा ता गीति गीतवान् भुजङ्गेशः ॥
[ वृ. र. अ. २,८ ]

इति तल्लक्षणात् ।

तत्रोपमायाः प्राचीनप्रतिपादित लक्षण खण्डयितु सव्याख्यान तल्लक्षणमुपन्यस्यति—[ **अस्या इति** ] । तावत् =प्रथमम्, अस्या उपमायाः, प्राचीना एवं लक्षणमाहुः कथयन्तीत्यर्थः । लक्षणत्वञ्चाव्याप्त्यतिव्याप्त्यसम्भवैतद्दोषत्रयरहितासाधारणधर्मवत्त्वमेव । अव्याप्तित्वञ्च लक्ष्यतावच्छेदकसमानाधिकरणत्वे सति लक्ष्यतावच्छेदकसमानाधिकरणाभावप्रतियोगितावच्छेदकधर्मवत्त्वम् । तेनासभवादौ असाधारणधर्मे च नातिव्याप्तिः । लक्ष्यतावच्छेदकसमानाधिकरणे[ णत्वे ] सति तद्विरुद्धधर्मसमानाधिकरणत्वमतिव्याप्तित्वम् । तेन नोक्तदोष. । लक्ष्यतावच्छेदकीभूताभावप्रतियोगित्वमसम्भवत्त्वम् । तेनाव्याप्तौ नातिव्याप्तिः । असाधारणधर्मत्वञ्च लक्ष्यतावच्छेदकसमनियतत्वम् । दूषणत्रयरहितत्वस्य तदुक्तौ तत्तद् दूषणशरीरघटिततत्तदभावकूटवत्त्वनिवेशे गौरवात् । तत्प्रयोजनं व्यवहारो व्यावृत्तिर्वा, 'व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनम्' इत्युक्तेः ।

वस्तुतस्तु—इतरव्यावृत्तिरेव लक्षणस्य मुख्य प्रयोजनम्, शब्दप्रयोगरूपव्यवहारस्य कण्ठताल्वादिव्यापारेणापि सम्भवात् । एतेषा दूषणानां हेत्वाभासे भागासिद्धिव्यभिचारविरोधत्वव्यवहार इति दिक् ।

## सुधा

तस्मात्तावत्प्रभेदान्यतमत्वकथनेन सर्वभेदावगमादिति केचित् ।

अत्र नव्याः—उपमानोपमेयस्य निगीर्याध्यवसानमेवातिशयोक्तिः । भेदानि तु[ स्तु ] तदनुगतरूपाभावादलङ्कारान्तराण्येव । न चान्यत्वादिभेदेष्वन्यत्वादिभिरभेदादेर्निगरणसम्भवेन लक्षणाक्रान्तत्वेन तेषां सम्भव एवेति वाच्यम् , अन्यत्वादिभिरन्यवस्तुप्रतीतेरेव चमत्कारित्वेनानुभवसिद्धतयाऽन्यत्वादिभिरभेदप्रतीत्यङ्गीकारेऽनुभवासङ्गतेः । न चान्यतमत्वस्य सर्वत्रानुगतत्वं वक्तुं शक्यते , विच्छित्तिवैलक्षण्ये सत्यन्यतमत्वस्याप्रयोजकत्वात्, उपमादिसकलान्यतमत्वस्य तल्लक्षणसत्त्वे उपमाद्यलङ्कारपृथक्कथनवैयर्थ्यापत्तेः । न चातिरिक्तालङ्कारकल्पने गौरवं स्यादिति वाच्यम् , प्रधानोत्कर्षकत्वरूपस्यालङ्कारत्वस्य त्वन्मतेऽप्यङ्गीकारात् , अन्यतमत्वस्य चमत्काराप्रयोजकत्वेनालङ्कारविभाजकोपाधित्वाभावात् । न चानेकालङ्कारविभाजकोपाध्यङ्गीकारे गौरवमिति वाच्यम् , अलङ्कारविभाजकोपाधिपरिगणनस्य पौरुषेयत्वेन तद्दोषाभावादिति वदन्ति ।

अत्र वदन्ति—रूपकभिन्नत्वे सति चमत्कृतिजनकाहार्यारोपनिश्चयविषयत्वमतिशयोक्तिलक्षणम् । रूपकवारणाय सत्यन्तोपादानेनानाहार्यत्वस्य प्रयोजनसिद्धावाहार्यत्वनिवेशस्य भ्रान्तिवारणाय सार्थकत्वेन न पूर्वापरकथनविरोधः । लक्षणालभ्यमुखादौ तद्धर्मस्य सत्त्वेन वैधर्म्यप्राप्त्याहार्यत्वाङ्गीकारे दोषाभावात् । एतल्लक्षणस्य सर्वेषु भेदेष्वनुगतत्वम् । अतिशयोक्तावभेदस्य द्वितीयेऽन्यत्वस्य तृतीये सम्बन्धस्य चतुर्थेऽसम्बन्धस्य पञ्चमे सहत्वस्य षष्ठे पूर्वापरविपर्ययस्य चमत्कृतिजनकाहार्यारोपनिश्चयविषयत्वरूपतल्लक्षणाक्रान्तत्वात् तद्भेद [ व ] त्वमस्त्येव । न चैवंविधस्यारोपविषयस्य सर्वालङ्कारे रूपकादिभिन्ने सत्त्वादतिप्रसङ्ग इति वाच्यम् , इष्टापत्तेः, अलङ्कारभावस्य चमत्काराधीनतया चमत्कारस्यैव तत्प्राधान्यप्रतिपादकत्वेन तत्सत्त्वे तत्तत्प्राधान्ये तदङ्गत्वेनावस्थिताया अतिशयोक्तेरप्रधानतया व्यपदेशायोग्यत्वात् 'प्रधानतया व्यपदेशा भवन्ति' इति न्यायेन तत्तदलङ्काराणामेव प्रधानतया व्यपदेशार्हत्वात् । सर्वत्रैवंविधे विषयेऽतिशयोक्तिरेव प्राणत्वेनावतिष्ठते । तां विना प्रायेणालङ्कारत्वाभावादिति विशेषालङ्कारप्रकरणे मम्मटेनोक्तत्वाच्च ।

सैषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते ।
यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना ॥

इत्यन्यैरुक्तत्वाच्चेत्यलम् ।

## सुधा

इय व्यङ्ग्या यथा—

तदप्राप्तिमहादुःखविलीनाशेषपातका ।
तच्चिन्ताविपुलाह्लादक्षीणपुण्यचया तथा ॥
चिन्तयन्ती जगत्सूतिं परब्रह्मस्वरूपिणम् ।
निरुच्छ्वासतया मुक्तिं गतान्या गोपकन्यका ॥

अत्रोदाहरणे जन्मसहस्रोपभोग्यानि सुकृतदुष्कृतफलानि वियोगदुःखचिन्ताभ्यां क्षा?यनुभूतानी?युक्तौ दुष्कृतसुकृतफलराशितादात्म्येनाध्यवसितौ भगवद्वियोगदुःख-चिन्ताह्लादौ प्रतीयेते इति निगीर्याध्यवसानरूपातिशयोक्तिद्वयप्रतीतेर्व्यङ्ग्यस्य सत्त्वात्। इयमतिशयोक्तिः श्रुतिस्मृत्योरपि—

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पल स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति ॥
या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥

इत्यादौ स्पष्टत्वादिति सर्वं शिवम् ।

**धरानन्देन** रचिताऽतिशयोक्त्यर्थबोधिनी ।
व्याख्यार्थचित्रमीमांसा**सुधाया**माप पूर्णताम् ॥
वसिष्ठगोत्रजातस्य ठाकुरस्य सुतास्त्रयः ।
पूर्णदासो रामबलो देवीदासश्च विश्रुताः ॥
लब्धजन्मा रामबलो द्वयोरपि कृपायुतः ।
श्रीगुरोः परमानन्दाल्लब्धेष्टो भरते पुरे ॥
आस्ते नाम्ना **धरानन्दो** मारुतेः पदसंस्थितः ।
तेनेयं **चित्रमीमांसासुधा**व्याख्या प्रकाशिता ॥

# चित्रमीमांसायां तट्टीकायाञ्चोद्धृतानां कारिकाणां श्लोकानाञ्च वर्णानुक्रमेण स्थलसंकेतः

—:❀:—

# अत्रोद्धृतानां ग्रन्थानां ग्रन्थकाराणाञ्च नामानि

शिवपुराणम्
कठोपनिषद्
हयग्रीववधनाटकम्
काव्यप्रकाशः
रसगङ्गाधरकारः
वाक्यपदीयकारः
नागेशभट्टः
भट्टोजिदीक्षितः
वृत्तरत्नाकरः
वैयाकरणभूषणसारः
पातञ्जलमहाभाष्यम्
चन्द्रः
छान्दोग्योपनिषद्
अग्निपुराणम्
ध्वन्यालोकः
वेणीसंहारः
हनुमन्नाटकम्
श्रीवत्सलाञ्छनभट्टाचार्यः
जयरामभट्टाचार्यमतानुयायिनः
सुबुद्धिनाथमिश्रः
चण्डीदासमतानुयायिनो दर्पणकृतः
न्यायसिद्धान्तमुक्तावली
वैयाकरणसिद्धान्तलघुमञ्जूषा
कुमारसम्भवम्
व्यक्तिविवेकः
गङ्गाधरशास्त्रिणः
माघकाव्यम्
रघुवंशकाव्यम्
कुवलयानन्दः
विद्यानाथः
चक्रवर्ती
न्यायपञ्चाननः
मल्लिनाथः
रघुवंशमहाकाव्यम्
मङ्खकः
रुद्रटः
चन्द्रालोकः
मीमांसकः
भट्टाचार्यः
अलङ्कारचन्द्रिका
मालतीमाधवनाटकम्
नैषधमहाकाव्यम्
विश्वेश्वरपण्डितः
पाणिनीयसूत्रम्
कैयटः
काशिका
भाष्यकारः
अलङ्कारकौस्तुभः
महेश्वरः
नव्याः
काव्यालोकः
दण्डी
प्रकाशः
अलङ्कारसर्वस्वकारः

वाचस्पतिमिश्रः

भामहः

कल्पतरुकारः

सरस्वतीकण्ठाभरणम्

अलङ्कारसर्वस्वटीका विमर्शिनी

विद्याधरः

शारीरकभाष्यम्

आनन्दवर्द्धनाचार्यः

हर्षचरितम्

अमरकोषः

विश्वकोषः

मेदिनीकोषः

चन्द्रः

